# तर्कसंग्रहः

संस्कृत हिन्दी टीका—

समुल्लसित—

न्यायबोधिनी—

सहितः।



टीकाकारः—

आनन्दझा न्यायाचार्य्यः,

काशी

श्रीः

# तर्कसंग्रह-न्यायबोधिनी

## सीता पद्माभ्यां-संस्कृत हिन्दी व्याख्याभ्यां

समुद्भासिता

---

व्याख्याता

वेदान्त वागीश—

साहित्यालङ्कार, पं० श्रीआनन्दझा न्यायाचार्य्यः

---

प्रकाशकः

सीता-साहित्य-सदन काशी संस्थार्थम्—

'लहरी बुक डिपो'

काशी।

---

मुद्रकः

श्यामलाल श्रीवास्तवः

रायल प्रिंटिंग वर्क्स, गोदौलिया, काशी।

---



---

प्रथम संस्करणम् मूल्यम् १॥)

## निवेदन।

सज्जनों !

वर्त्तमान संस्कृतशिक्षा का प्रारम्भिक जीवन अति दयनीय है। प्रथमा एवं मध्यमा के परीक्षार्थी कथञ्चित् पाठों को रटकर परीक्षा तो पास भी करलेते हैं किन्तु पदार्थबोध न होनेके कारण आगे की उनकी शिक्षा विकसित, पल्लवित, पुष्पित और फलित नहीं होने पाती। आवश्यकता है कि प्रारम्भिक संस्कृतशिक्षा के पाठ्य ग्रन्थों की सरलसंस्कृत तथा राष्ट्रभाषा में व्याख्या लिखी एवं प्रकाशित की जाय, जिससे छात्रों की प्रवृत्ति पदार्थबोध की ओर हो। और वह व्याख्या ऐसी बृहत् न हो जिसे कोमलमति छात्र स्मरण न रख सकें। इन्हीं बातोंको ध्यान में रखकर युक्तप्रान्त तथा बिहार आदि की प्रथमा मध्यमा परीक्षाओं में पाठ्यरूपसे निर्द्धारित तर्कसंग्रह तथा उसकी टीका न्यायबोधिनी की यह अतिसरल संस्कृत तथा हिन्दी में व्याख्या प्रकाशित की गई है। इस व्याख्याके रचयिता साहित्यालङ्कार वेदान्त वागीश पं० श्री आनन्द झा न्यायाचार्य प्रधानाध्यापक साङ्गब्रह्मविद्यालय तथा निर्मलसंस्कृतविद्यालय काशी महोदय हैं। आप कितने बड़े सिद्धहस्त लेखक हैं इस का परिचय इसी पुस्तक के पाश्चात्यावरण पृष्ठ पर मुद्रित ग्रन्थों की नामावली से मालूम होगा। यह विशेषता आपकी लेखनी में ही देखी जाती है कि संस्कृत, हिन्दी, मैथिली और बङ्गला इन चार चार भाषाओं में अबाधगति रखती है। आपके ही सुयोग्य छात्र स्वामी श्रीविश्वरूपानन्द श्रीरामकृष्णअद्वैताश्रम काशी ने आपके तत्त्वाऽवधान में वेदान्तदर्शन शाङ्करभाष्य की वङ्ग भाषामें विस्तृत व्याख्या की है। जिसका प्रकाशन हो रहा है। आशा है संस्कृत के छात्र तथा अन्य भी पदार्थबोधके इच्छुक महानुभाव इस पुस्तक को शीघ्र अपनाकर अपूर्व लाभ उठायेगें। एवं इस **सीता साहित्य सदन काशी** संस्थाको एतादृश अन्यान्य ग्रन्थों के प्रकाशनार्थ प्रोत्साहित करेगें। इस संस्करण में शीघ्रता प्रयुक्त जो मुद्रणाशुद्धि रह गयी है तदर्थ मैं क्षमाप्रार्थी हूँ।

व्यवस्थापक—

**सीता-साहित्य सदन काशी**

श्रीः

# तर्कसंग्रहः ।

न्यायबोधिनी-संस्कृत हिन्दीव्याख्योपेतः ।



**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥**

न्यायबोधिनी ।

अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति-निधायेति ॥ १ ॥

सीता ।

चरण-प्रणताशेष-हृदावरण-वारिणी ।
उदेतु हृदये काऽपि सवीणा करुणा मम ॥

तर्कसंग्रहं व्याख्यातुकामोऽत्रभवान् गोवर्द्धनो मङ्गलमाचरन् कर्तव्यं स्पष्टयति-अखिलेत्यादि । गोवर्द्धनसुधीः न्यायबोधिनीं तनुते-इत्यन्वयः । न्यायबोधिनीं-न्यायबोधिनीनाम्नीं तर्कसंग्रहव्याख्यां, तनुते-करोति इत्यर्थः । किं कृत्वा क्रियते-इत्याकांक्षायामाह-अखिलेति । अखिलेषु-समस्तेषु, आगमेषु-वेदस्मृतिपुराणादिषु, सञ्चारः-सञ्चरणं प्रतिपाद्यतेति यावत्, भवति यस्य तत् अखिलागमसञ्चारि, समग्रशास्त्र-प्रतिपाद्यमितिभावः । श्रीकृष्ण इतिआख्या-नाम यस्य तत् श्रीकृष्णाख्यं श्रीकृष्ण इतिनामकं, परं-उत्कृष्टं, महः-तेजः, ध्यात्वा ध्यानविषयीकृत्य ।

यत्—कृष्णनामकंसदपि उत्कृष्टं तेजः, एवं निखिलशास्त्रप्रतिपाद्यभूतं तत् ध्यानविषयीकृत्य गोवर्द्धनपण्डितः न्यायबोधिनीनाम्नीं तर्कसंग्रहस्य व्याख्यां करोति इतिसरलार्थः।

चिकीर्षितस्य-कर्तव्यतया अभिप्रेतस्य। इदं ग्रन्थस्यविशेषणम्। निर्विघ्नं परिसमाप्तिरेव अर्थः प्रयोजनं यस्य तत् निर्विघ्नपरिसमाप्त्यर्थम्, एवं इष्टायाः विश्वेशात्मकदेवतायाः नमस्कार एव आत्मा स्वरूपं यस्य तत् इष्टदेवतानमस्कारात्मकं। उभयमिदं मङ्गलस्य विशेषणम्, शिष्यशिक्षार्थं = शिष्यान् शिक्षयितुं। निबध्नाति = विलिखति।

**निधायेत्यादिमूले**—विश्वेशं हृदि निधाय गुरुवन्दनंच विधाय वालानां सुखबोधाय तर्कसंग्रहः क्रियते इत्यन्वयः। मयेत्यध्याहारः। विश्वस्य ईशः शासकः तं। निधाय नितरां धारयित्वा। हृदि-मनसि। तथाच ध्यात्वा इत्यर्थः। गुरोः वन्दनं गुरुवन्दनं गुरुप्रणतिमित्यर्थः। विधाय कृत्वा। वालानां = उपदेशग्रहणयोग्यतावतां अज्ञानाम्। सुखेन बोधः सुखबोधः अनायासबोधः तस्मै। तर्क्यन्ते इति तर्काः द्रव्यादयः पदार्थाः। तेषां संक्षेपेण ग्रहः ज्ञानं यस्मात् ग्रन्थात् भवति असौ तर्कसंग्रहः, तन्नामको ग्रन्थः। क्रियते = विरच्यते।

पद्मा।

'अल्पज्ञों को द्रव्यगुण आदि पदार्थों का ज्ञान अनायास हो एतदर्थ जगत्प्रभु भगवान् शङ्कर का ध्यान करके तर्कसंग्रह नामक ग्रन्थ की रचना मैं करता हूँ' यह "निधाय हृदि" इत्यादि मूल का अर्थ है। 'चिकीर्षितस्य" इत्यादि न्यायबोधिनी का अर्थ यह है कि इस तर्क संग्रह की समाप्ति निर्विघ्न हो एतदर्थ किये गये इष्टदेव भगवान् शङ्कर के नमस्कारस्वरुप मङ्गल को शिष्यशिक्षार्थ अर्थात् "ग्रन्थ के आदि में मङ्गलाचरण करना चाहिये" यह शिष्यों को शिक्षा देने के लिए लिखते हैं "निधाय" इत्यादि। सारकथा यह कि मङ्गल किया गया निर्विघ्नग्रन्थ समाप्ति के लिए और लिखा गया शिष्यशिक्षा के लिए।

पदार्थाः कति, कानि च, तेषां नामानि—

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः॥**

(न्या०) अथ पदार्थान्विभजते—द्रव्येति। तत्र सप्तग्रहणं

पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय। ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति। तथाहि वह्निसंयुक्तेन्धनादौ सत्यपि मणिसंयोगे दाहो न जायते। तच्छून्येन तु जायते। अतो मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यते इति कल्प्यते। तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत्। न। मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात्। तस्मात्सप्तैवेति सिद्धम् ॥

## सीता।

पदार्थाः कति ? कानिचेति जिज्ञासायां उक्तं मूले द्रव्यगुणादीति। द्रव्याणिच गुणाश्च कर्म्माणिच सामान्यंच विशेषाश्च समवायश्च अभावाश्च इति द्रव्यगुण-कर्म्मसामान्य-विशेषसमवायाभावाः। अतएव सप्त=सप्तसंख्याकाः। पदार्थाः=पदस्य नाम्नः अर्थाः प्रतिपाद्याः। वस्तूनि इति यावत्।

न्यायबोधिन्यां "तत्रसप्तग्रहणं" इत्यादेः अयमर्थः—द्रव्यादि नामसङ्कीर्त्तनेनैव पदार्थाः सप्त इति लाभे सप्तपदं किमर्थं इति नाशङ्कनीयं यतोहि यत्र यत्र पदार्थत्वं भवति तत्रतत्र द्रव्यादिसप्तान्यतमत्वं भवति। अर्थात् यो यः पदार्थोभवति द्रव्यादीनां मध्य एव कश्चन भवति इति व्याप्तिलाभाय=इतिनियमप्रतिपादनाय तत् प्रोक्तम्। ततोन्यूनाधिकपदार्थसम्भावनानिरासः कृतः। कुतो नाधिक इतिशङ्कां परिहारायाह—"ननुशक्तिपदार्थस्याष्टमस्येति" प्रतिपादयति तथाहीति। मण्यादिना प्रतिबन्धकेन संयुक्तो यः इन्धनादिः तस्मिन्। वह्निसंयोगे सत्यपीत्यन्वयः। तच्छून्येनतु=मण्यादिप्रतिबन्धकशून्येनतु। जायते दाहः इति सम्बन्धः। मणेः समवधानं संयोगः तस्मिन् सति। कल्प्यते अनुमीयते। अनुमानाकारः वह्निः दाहानुकूलशक्तिमान् दाहजनकत्वात् इति। उत्तरयति मणेः प्रतिबन्धकत्वेनेत्यादि। दाहंप्रतीतिशेषः। मणेः समवधानं संयोगः, असमवधानं तदभावः ताभ्यां। अनन्ताः याः शक्तयः दाहानुकूलाः तासां ये ध्वंसाः येच तासां प्रागभावाः तेषां कल्पनायाः स्वीकारस्य अन्याय्यत्वात्=अनुचितत्वात् इत्यर्थः। अयंभावः दाहानुकूलतया शक्तिरतिरिक्तः पदार्थोनाशङ्कनीयः। यतः चन्द्रकान्तमण्यादेः दाहादिकं प्रति प्रतिबन्धकत्वं। अतः तेषां

सत्वे नदाहः, असत्त्वेतु दाहः इत्युक्तावेव निर्वाहे किं शक्तिपदार्थकल्पनेनेति।

पद्मा।

न्यायबोधिनी का सारांश यह है कि मूल में "सप्तपद" इसलिए दिया गया है कि कोई भी व्यक्ति इस सात से अधिक पदार्थ होने की सम्भावना न करे। शक्ति पदार्थ इसलिए अधिक नहीं है कि चन्द्रकान्तमणि आदि को दाह आदि कार्य्यके प्रति प्रतिबन्धक मानेगें। अतः उनके अभाव दाह कार्य्यके प्रति "प्रतिबन्धका भाव होनेके कारण" कारण हो जायेगें। इससे ही चन्द्रकान्त आदिके रहने से अग्नि संयोग होने पर भी दाह का न होना और उसके नहीं रहने से दाह का होना ये दोनों ही उपपन्न हो जायेगें, फिर अनन्त शक्तियां एवं उनके प्रागभाव और ध्वंस आदि को मानना उचित नहीं।

कति द्रव्याणि, कानि च तानि—

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥**

(न्या) द्रव्याणि विभजते—पृथिवीति। नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति। तथाहि—नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम्। न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्? आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः। तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः। जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेत्, न। तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाभावात्। न च विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति वाच्यम्? तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव, दीपापसरणक्रियाया एव तत्र भानात्।

सीता

मूले तत्र = उक्तेषु सप्तपदार्थेषु मध्ये। द्रव्याणि नवैवेत्यन्वयः। तानि कानीत्याकांक्षायामुक्तं पृथिव्यप्तेजेत्यादिना।

पृथिवीच आपश्च तेजश्च वायुश्च आकाशश्च कालश्च दिक्च आत्माच मनश्च इति पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि। द्रव्यस्य लक्षणं तु समवायेन गुणाश्रयत्वं बोध्यम्। न किमपि तादृक् द्रव्यं भवति यत्र समवायसम्बन्धेन कोऽपि गुणो न तिष्ठति। अन्धकारं दशमद्रव्यत्वेनादाय विभागव्याघातं शङ्कते न्यायबोधिन्यां नन्वन्धकारस्येत्यादि।

शङ्कामुपपादयति—तथाहिनीलं तमश्चलतीति। "नीलं" इत्यनेन रूपाश्रत्वं, "चलति" इत्यनेन क्रियाश्रयत्वंदर्शितम्। तयोश्च द्रव्यलक्षणतया अन्धकारस्य द्रव्यत्वम् इत्यर्थः। सत्यपि तस्य द्रव्यत्वे घटादेरिव पृथिव्यादिषु अन्तर्भावे कथं द्रव्यनवत्वव्याघातशङ्का इति शङ्कानिरासायाह—नच क्लृप्तेत्यादि। क्लृप्तेषु स्वीकृतेषु पृथिव्यादिषु द्रव्येषु अन्तर्भावात् = गतार्थत्त्वात्। तमसः अभावरूपतास्वीकारेण अतिरिक्त द्रव्यतां निराकरोति—न तमसस्तेजोभावेत्यादिना। उपपत्तौ निर्वाहे। अतिरिक्ततत्कल्पनायाम् अतिरिक्तद्रव्यस्य कल्पनायाम्। मानाभावात् प्रमाणाभावात्। तमः कथं तेजोऽभावरूपं तद्विपरीतं तेज एव न कथं तमोभावरूपं इतिशङ्कां निराकरोति—नचविनिगमनाविरहादिति। एकत्रपक्षपातिनी युक्तिः विनिगमना तस्याः विरहः अभावः प्रमाणाभावः तस्मात्। नचेतिवाच्यमिति परेणान्वयः। निराकरणे हेतुमाह तमसोऽभावरूपत्वे इत्यादि। सर्वैः अनुभूतः यः उष्णः स्पर्शः तदाश्रयो यद्द्रव्यान्तरं तत्कल्पने गौरवात् इत्यर्थः। उपसंहरति तस्मादिति। नीलं तमश्चलतीति प्रतीतेस्तर्हि का गतिः इति शङ्कां निराकरोति—तमसि नीलत्वादिप्रतीतिस्त्विति, तथाचायं सारार्थः—अन्धकारं दशमद्रव्यत्वेनादाय न द्रव्यनवत्वव्याघातः तस्य प्रौढप्रकाशकतेजोभावरूपत्वेन द्रव्यत्वस्यैवासम्भवात्। नीलं तमश्चलतीति ज्ञानं भ्रमात्मकम् इति न तद्बलेन तस्य द्रव्यत्वसिद्धिः। द्रव्यत्वस्यैवासिद्धौच तस्य क्व तद्द्रव्यान्तर्भावानन्तर्भावविचारः व्यर्थ एवेति सिद्धं नवैव द्रव्यमिति।

पद्मा।

न्यायबोधिनी का सारांश यह है कि अन्धकार को दशमद्रव्य नहीं माना जा सकता। अतः द्रव्यों की संख्या नौ ही है अधिक नहीं। "अन्धेरा काला है और वह चलता है" इस प्रकार ज्ञान होने के कारण वह द्रव्य है, किन्तु निर्गन्ध

होने के कारण वह पृथवी नहीं है। और नीलरूपयुक्त होने के कारण वह जल से लेकर मन तक में अन्तर्भूत नहीं हो सकता अतः उसे दशवाँ द्रव्य मानना ही पड़ेगा" यह नहीं कहा जा सकता। क्यों कि अन्धेरे में नीलरूप का प्रत्यक्ष उसी प्रकार भ्रम है जैसे आकाश में नील रूप का प्रत्यक्ष भ्रमरूप होता है। चलन भी तत्वतः उसमें नहीं है किन्तु दीप आदि के चलन से उसमें चलन का भ्रम होता है। अतः वह द्रव्य ही नहीं है फिर अधिक द्रव्य होने की तो चर्चा ही नहीं की जा सकती।

कति गुणाः, के च ते ?—

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्काराश्चतुर्विंशतिर्गुणाः ॥**

सोता।

गुणाः कति के च ते ? इति जिज्ञासायां मूले प्रोक्तं रूपरसगन्धेत्यादि। रूपं च रसश्चेत्यादिप्रकारेण विगृह्य चार्थे द्वन्द्वः समासः। चतुर्विंशतिः = चतुर्विंशतिसंख्याकाः। सामान्यवत्त्वे सति कर्म्मान्यत्वे सति निर्गुणत्वम् गुणस्यलक्षणम् सामान्यादीनां न सामान्यवत्वं, कर्मणो न कर्म्मान्यत्वं द्रव्यस्य न निर्गुणत्वम् इति न तत्र तत्रातिव्याप्तिः। लघुत्व-मृदुत्व-कठिनत्वादीनादाय न गुणाधिक्यशङ्का कर्त्तव्या लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोस्तु संयोगधर्म्मरूपत्वात्। गुणे समवायेन गुणाभावेऽपि स्वरुपसम्बन्धेन तत्सत्त्वेबाधकाभावेन "चतुर्विंशति र्गुणाः" इति संख्यात्मकगुणविशिष्टगुणप्रतिपादकस्य वाक्यस्य प्रयोगो नासङ्गत इति।

पद्मा।

रूप रस गन्ध स्पर्श संख्या परिमाण पृथक्त्व संयोग विभाग परत्व अपरत्व गुरुत्व द्रवत्व स्नेह शब्द बुद्धि सुख दुःख इच्छा द्वेष प्रयत्न धर्म्म अधर्म्म संस्कार ये चौबीस गुण है। गुण वह है जो द्रव्य में समवाय सम्बन्ध से रहता हो साथ ही कर्मों से भिन्न और जाति से युक्त हो तथा निर्गुण हो। यों तो गुण में गुण समवाय सम्बन्ध से नहीं रहता किन्तु स्वरूप नामक सम्बन्ध से संख्यात्मक

गुण गुण में भी रहता है अतः 'चैतुर्विंशतिगु णाः" यह प्रयोग असङ्गत नहीं हुआ है।

कियन्ति कर्माणि, कानि च तानि--

## उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि॥

सीता।

कर्म्माणि कियन्ति कानिच तानीति जिज्ञासायामाह मूले-- उत्क्षेपणेत्यादि। अत्रापि उत्क्षेपणञ्च अपक्षेपणंच इत्यादि विग्रहे चार्थे द्वन्द्वः समासः। द्रव्यगुणभिन्नत्वे सति सामान्यवत्त्वं कर्मणो- लक्षणं। द्रव्ये द्रव्यभेदस्य गुणेच गुणभेदस्य सामान्यादिषु च सामान्यवत्त्वस्याभावेन न तत्र तत्रातिव्याप्तिः। उत्क्षेपणादीनां लक्षणं स्वयमेव वक्ष्यते। अत्रापि पञ्च पदं न्यूनाधिक संख्याशङ्कानिरासार्थम्। भ्रमणरेचनस्यन्दनादीनां कर्म्मत्वेऽपि गमने एवान्तर्भावात् न पञ्च- त्वविरोधः। गुणे इव कर्म्मण्यपि स्वरूपसंम्बन्धेन संख्यासत्तया न "पञ्चकार्म्माणी" त्यस्यायोग्यवाक्यता।

पद्मा।

कर्म्म उसे कहते हैं जिसके होने पर संयोग विभाग अनिवार्य्य हो। इसके प्रभेद पाँच हैं जैसे उत्क्षेपण अपक्षेण आकुञ्चन प्रसारण और गमन। ऊपर जाना है उत्क्षेपण, नीचे जाना है अपक्षेपण, सकुचना है आकुञ्चन फैलनां है प्रसारण, और अन्य सभी प्रकार चलन हैं गमन।

सामान्यं कतिविधम् ?--

## परमपरं चेति द्विविधं सामान्यम्॥

सीता।

किं नाम सामान्यं कतिविधं चेति जिज्ञासायामाह मूले—परम- परमिति। सामान्यं जातिरूपः समानो धर्म्मः। द्विविधं = द्विप्रकारं। परम् अधिकदेशवृत्ति। अपरम् अल्पदेशवृत्ति। सामान्यस्य लक्षणं नित्यत्वे सति अनेकत्र समवायसम्बन्धेन वर्त्तमानत्वरूपं बोध्यम्। सत्ता सर्वेषु द्रव्येषु गुणेषु कर्म्मसु च समवाय सम्बन्धेन तिष्ठतीति

अधिकदेशवृत्तितया परसामान्यरूपा। घटत्वादीनां तु घटादिमात्रवृत्तितया अपरसामान्यत्वम्। तत्त्वतः सामान्यस्य त्रैविध्यं वक्तुमुचितं द्रव्यत्वपृथिवीत्वादेः परापरसामान्यत्वसम्भवात्। तथाच सामान्यं त्रिविधं परम् अपरं परापरंचेति। परं सत्ता, अपरं घटत्वादिकं परापरं द्रव्यत्वपृथिवीत्वादिकमिति।

पद्मा।

सामान्य वह है जो नित्य है और अनेक अधिकरणों में समवाय सम्बन्ध से रहता है। घट अनित्य है किन्तु घटत्व नित्य है और हजारों घटों में समवाय सम्बन्ध से रहता भी है, अतः वह सामान्य है। सामान्य का ही दूसरा नाम जाति भी है। जाति दो प्रकार हैं पर और अपर। पर वह है जो अधिक आश्रयों में रहे। और अपर वह है जो अपेक्षाकृत उससे अल्प आश्रय में रहे। सत्ता नाम की जाति अन्य सभी सामान्यों से अधिक आश्रय में रहती है अतः वह पर है। घटत्व पटत्व आदि जातियाँ अल्प अधिकरण में रहती हैं अतः अपर हैं। द्रव्यत्व पृथिवीत्व आदि परापर सामान्य हैं, क्योंकि सत्ता से वे अल्पदेशवृत्ती और घटत्वादि से अधिक देशवृत्ती हैं।

क्रियन्तो विशेषाः ?—

## नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव।

सीता

के विशेषाः कियन्तश्चेति जिज्ञासायामाह—नित्यद्रव्येत्यादि। अत्र विशेषा इत्यस्यावृत्तिः। व्यावर्त्तका इति तत्र प्रथमस्यार्थः, तथाच नित्यद्रव्यवृत्तयो व्यावर्त्तका विशेषाः इति समुदितार्थः। नित्यद्रव्याणि पृथिव्यप्तेजोवायूनां परमाणवः आकाशादिपञ्चकं च। सावयवानां घटादीनां कपालाद्यवयवभेदाद्भेदः निरवयवानां तु परमाण्वादीनां न तथा भेदः सुग्रहः इति तदर्थं विशेषपदार्थस्य स्वीकारः। विशेषास्तु स्वतो व्यावृत्ताः इति न तदर्थं विशेषान्तरस्य स्वीकारः। "अयं परमाणुः अन्येभ्यो भिन्नः एतद्विशेषात्" इत्यनुमाने हेतुतया तस्य नित्यद्रव्यव्यावर्त्तकत्वम्।

पद्मा

जो पृथिवी जल तेज और वायु के परमाणुओं को एवं आकाश काल दिक्

आत्मा और मन को परस्पर भिन्न समझाने के लिए उनमें पृथक् पृथक् रहता है, अतएव असंख्य हैं उसका नाम है विशेष। विशेष पदार्थ मानने का प्रयोजन यही है कि इसके द्वारा परमाणु आदि निरवयव द्रव्यों को परस्पर भिन्न समझा जा सकता है। सावयव द्रव्यों में इसे मानने का कोई प्रयोजन नहीं। क्योंकि वे अवयवों के भेद से ही परस्पर भिन्न समझे जा सकते हैं।

समवायः कतिविधः ?--

**समवायस्त्वेक एव।**

सीता

समवायः कतिविधः इतिजिज्ञासायामाह—समवायस्त्विति अयुतसिद्धसम्बन्धत्वं समवायस्य लक्षणम्। अवयवावयविनोः गुण गुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः नित्यद्रव्यविशेषयोश्च अयुतसिद्धत्वम्। तथाच अवयवेषु अवयवी येन सम्बन्धेन तिष्ठति स सम्बन्धः समवायः इति फलितोऽर्थः। एव गुणगुण्यादिस्थलेऽपि बोध्यम्। तस्य नानात्वे मानाभावात् एकत्वम् इत्येवोक्तं एक एवेति। एवकारेण नानेक इति स्पष्टीकृतम्। समवायस्यास्य केचन प्रत्यक्षं मन्यन्ते केचनानुमितिम् इति।

पद्मा

कोई भी पदार्थ कहीं किसी सम्बन्ध से रहता है। अतः कपाल में घट, घट में रूप आदि गुण, एवं क्रिया, तथा घटत्व आदि जातियाँ ये जिस सम्बन्ध से रहते हैं उसका नाम है समवाय। कुछ लोग इसका प्रत्यक्ष मानते हैं और कुछ लोग इसका अनुमान मानते हैं।

अभावः कतिविधः ?—

**अभावश्चतुर्विधः। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति॥ इत्युद्देशग्रन्थः॥**

सीता

अभावतत्प्रभेदजिज्ञासायामाह अभावेति। न भावोऽभाव इति योगार्थबलेन भावभिन्नत्वम् अभावत्वम् इति अभावस्य लक्षणं

सूचितम्। चतुर्विधः चतुष्प्रकारः। वस्तुन उत्पत्तेः प्राक् विद्यमानः अभावः प्रागभावः। स एव हि "भविष्यति" इति प्रतीयते इति "विनाश्यभावत्वं प्रागभावत्वम् इति प्रागभावस्य लक्षणम्। घटादेः मुद्गरपाताद्यनन्तरं यः अभावो भवति स ध्वंसः तथाच जन्याभावत्वं ध्वंसत्वम् इति तल्लक्षणम्। संयोगेन घटोनास्ति समवायेन घटोनास्ति इत्यादि प्रतीतेः विषयो यः अभावो भवति सः अत्यन्ताभावः। तथाच तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अत्यन्ताभावत्वम् इति अत्यन्ताभावस्य लक्षणम्। अथवा नास्तीतिप्रतीतिविषयाभावत्वम् अत्यन्ताभावत्वमिति तल्लक्षणम्। तादात्म्य सम्बन्धेन स्वस्मिन् स्वमेवतिष्ठति इति नियमः, तथा यो यत्र येन सम्बन्धेन न तिष्ठति तस्य तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तिष्ठतीति नियमः। तथाच तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति अन्योन्याभावस्य लक्षणम्। अथवा नेतिप्रतीतिविषयाभावत्वं तल्लक्षणम्। अन्योन्याभावस्यैवापरं नाम भेद इति परस्पराभाव इति चेति।

पद्मा

अभाव चार प्रकार हैं, यथा—प्रागभाव, प्रध्वंसाभाव, अत्यन्ताभाव और अन्योन्याभाव। घट के होने से पूर्व कपाल में जो घट का अभाव होता है वह होता है प्रागभाव। घट पर मुशल आदि के प्रहार से जो घट का अभाव होता है वह है प्रध्वंसाभाव। कहीं घट के होते हुए भी अन्यत्र जो घट का अभाव होता है वह है अत्यन्ताभाव। जैसे "घर में घट नहीं है" इस ज्ञान का विषय अभाव है अत्यन्ताभाव। घट पट नहीं है, पट घट नहीं है इस ज्ञान का विषय अभाव है अन्योन्याभाव। इसीको भेद परस्पराभाव भी कहा जाता है। सार कथा यह है कि जिसका नाश हो और जिसकी उत्पत्ति न हो ऐसे अभाव का नाम है प्रागभाव। जिसकी उत्पत्ति तो हो किन्तु नाश जिसका न हो ऐसे अभाव का नाम है प्रध्वंसाभाव। जिसकी उत्पत्ति भी न हो और नाश भी न हो, और उसकी प्रतियोगिता संयोग समवाय आदि किसी सम्बन्ध से अवच्छिन्न हो वह होता है अत्यन्ताभाव। और प्रतियोगिता तादात्म्य नामक सम्बन्ध से अवच्छिन्न हो तो अभाव होता है अन्योन्याभाव।

पृथिव्याः किं लक्षणम्, कति च भेदाः—

तत्र गन्धवती पृथिवी। सा द्विविधा। नित्याऽनित्याच। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः।

(न्या०) गन्धवतीति। गन्धवत्त्वं पृथिव्या लक्षणम्। लक्ष्यं पृथिवी। पृथिवीत्वं लक्ष्यतावच्छेदकम्। यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः तथा च लक्ष्यतावच्छेकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना। गन्धसमानाधिकरण-द्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम्॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम्॥

सीता

पृथिव्याः किं लक्षणं कियन्तः प्रभेदाः इति जिज्ञासायामाह मूले तत्रगन्धवतीत्यादि। तत्र=नवसु द्रव्येषु मध्ये। सा=पृथिवी। द्विविधा द्विप्रकारा। मनोभिन्ननिरवयवाणुद्रव्यं परमाणुः तत्स्वरूपा पृथिवी नित्या इति "नित्यापरमाणुरूपा" इत्यस्यार्थः। क्रियते इति कार्य्यं, घटादि तद्रूपा कार्य्यरूपा। भेदादित्यस्य प्रत्येकमन्वयात शरीरभेदात् इन्द्रियभेदात् विषयभेदात् इत्यर्थः। विषयत्वम् उपभोग्यत्वं। परमाणूनां तदभावेनाविषयत्वम्। दीपिकाकृतस्तु परमाणोरपि विषयत्वं वदन्ति। तन्मते सामान्यतः पृथिव्या एवायं विभागः "पुनस्त्रिविधेति"। अत्र तु कार्य्यपृथिव्या एवायं विभागः। पृथिव्याः लक्षणमुपदिशति न्यायबोधिन्याम्—गन्धवत्त्वमित्यादि। लक्षणम् असाधारणो धर्म्मः। लक्ष्यलक्षणभावं स्पष्टयति—"लक्ष्या पृथिवी" त्यादिना। यत् लक्ष्यते स्वेतरभिन्नतया ज्ञाप्यते तत् लक्ष्यम्। येन लक्ष्यते तत् लक्षणम्। ज्ञायते हि पृथिवी पृथिवीतरभिन्नतया गन्धवत्वेन इति पृथिव्याः लक्ष्यत्वम्, गन्धवत्वस्य च पृथिवीलक्षणत्वमिति भावः।

उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति नियमेन उत्पत्ति क्षणावच्छिन्ने घटादौ लक्षणस्य गन्धवत्त्वस्याव्याप्तिमाशङ्क्य तं परिष्करोति—गन्धसमानाधिकरणेति। सामानाधिकरण्यं तदधिकरण-वृत्तित्वम्। तथाच गन्धाधिकरणे वर्त्तमाना या द्रव्यत्वव्याप्या जातिः तादृशजातिमत्त्वम् इति तदर्थः। गन्धाधिकरणं द्वितीयक्षणा-वच्छिन्नघटादिकं तत्र वर्त्तमाना सती द्रव्यत्वस्य व्याप्यभूता अर्थात् द्रव्यत्वापेक्षया अल्पदेशवृत्तिर्जातिः पृथिवीत्वरूपा सा उत्पत्तिकालीने ऽपि घटादौ विद्यते इति तादृशजातिमत्त्वस्य लक्षणस्य तत्र गतत्वात् नाव्याप्तिः इतिभावः। उक्तां लक्ष्यलक्षणभावप्रक्रियां स्थलान्तरे सञ्चारयति शीतस्पर्शवत्त्वादीति। पार्थिवं शरीरं दर्शयति मूले शरीरमिति। पार्थिवमितिशेषः। तथाच अस्मदादीनां शरीरं पार्थिवमित्यर्थः। पार्थिवमिन्द्रियमाह—इन्द्रियमित्यादि। नासाग्रवर्त्ति गन्धग्राहकं घ्राणं इन्द्रियमित्यन्वयः। अत्रापि पार्थिवमितिशेषः। विषयमाह मृत्पाषा-णेति। पार्थिवद्व्यणुकमारभ्य महापृथिवीपर्य्यन्तस्य पार्थिवविषयत्व-मितिभावः।

पद्मा।

जिसमें गन्धगुण है वह है पृथिवी। वह दो प्रकार है नित्य पृथिवी और अनित्य पृथिवी। परमाणुरूपा पृथिवी नित्यपृथिवी और द्व्यणुक आदिरूप पृथिवी है अनित्यपृथिवी। अनित्य फिर तीन प्रकार है शरीररूप इन्द्रियरूप और विषयरूप। हम लोगों का शरीर शरीर रूप पृथिवी है। और नाक के आगे रहने वाला घ्राण है इन्द्रिय रूप पृथिवी। मट्टी पत्थर आदि अर्थात् शरीर और इन्द्रियको छोड़कर अन्य जितने भी पार्थिव हैं वे सभी विषय रूप पृथिवी हैं। परमाणु विषय नहीं हैं अतः शरीर इन्द्रिय और विषय इस प्रकार विभाग जन्य पृथिवीका ही किया गया है यह न्यायबोधिनीकारका मत है। न्यायबोधिनी में सब जगह के लिए लक्ष्यलक्षणभाव को स्पष्ट करते हैं 'लक्ष्या पृथिवी' इत्यादि। सारांश यह है कि जिसका लक्षण किया जाय वह होता है लक्ष्य, और उसमें रहती है लक्ष्यता। और उस लक्ष्यता के साथ समनियत रूपसे रहनेवाला लक्षण से भिन्न धर्म्म होता है लक्ष्यतावच्छेदक। और लक्ष्यता होती है उस धर्मसे अव-च्छिन्ना। क्योंकि जो जिसका अवच्छेदक होगा उससे सो अवच्छिन्न होगा। जब कि गन्धवत्व पृथिवीका लक्षण बनाया जाता है तो पृथिवी होती है लक्ष्य, उसमें

रहती है लक्ष्यता और पृथिवीत्व होता है लक्ष्यतावच्छेदक और लक्ष्यता होती है पृथिवीत्वसे अवच्छिन्ना। इसी प्रकार अन्य स्थल में भी समझना चाहिये। उत्पत्तिकाल में द्रव्य में गुण न रहने के कारण गन्धवत्व लक्षण यद्यपि उसमें नहीं जाता है। अव्याप्ति होती है। तथापि गन्धवत्व का अर्थ 'गन्धवज्जातीयत्व' समझना चाहिये। उत्पत्तिकालीन घट आदि में गन्ध न होने पर भी गन्धवज्जातीयत्व है। क्योंकि उत्पत्तिकालीन घटमें भी वह पृथिवीत्व जाति है जोकि द्वितीयादिक्षणकालीन घट आदि में है। यह बात गन्धसमानाधिकरण इत्यादि परिष्कृत लक्षण के द्वारा बतलायी गई है। गन्धके अधिकरण द्वितीय क्षणादिकालीन घट में रहने वाली जो जाति पृथिवीत्व, तद्वत्ता उत्पत्तिकालीन घट में भी है अतः लक्षणसमन्वय होता है।

जलस्य किं लक्षणम्, कति च भेदाः—

**शीतस्पर्शवत्य आपः। ता द्विविधाः। नित्याः अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः॥**

सीता।

जलस्य किं लक्षणं कति च भेदाः इति जिज्ञासायामाह मूले- शीतस्पर्शेत्यादि। शीतस्पर्शवत्त्वं जलस्य लक्षणमित्यर्थः। शीतपदानुपादाने उष्णादिस्पर्शमादाय तेज आदावतिव्याप्तिः स्यात् अतः तदुक्तम्। स्पर्शपदं स्पष्टार्थम्। गन्धवत्त्वमित्यत्रेवात्रापि आश्रयत्वं समवायेन बोध्यं, तेन न कालिकमादाय कालेऽतिव्याप्तिः। अत्रापि शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वं लक्षणं बोध्यम्। अन्यथा उत्पत्तिकालीनजलेऽव्याप्त्यापत्तेः। तदुक्तौ च, जलत्वजातिमादाय दोषपरिहारः। अन्यव्याख्या पूर्ववद्बोध्या।

पद्मा ।

जिसका स्पर्श शीतल हो उसे जल समझना चाहिये । अन्य द्रव्यों में शीतलता की उपलब्धि जलसम्बन्ध से ही होती है । यहाँ भी शीतस्पर्शवत्त्व का अर्थ शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्व समझना चाहिये । तादृश जाति पद से जलत्व को लेकर समग्र जल में लक्षण समन्वय समझना चाहिये । जल भी नित्य और अनित्य भेद से दो प्रकार है । अनित्य जल शरीर आदि भेदों से तीन प्रकार होता है वरूण आदि का शरीर जलीय है । जिह्वाग्रस्थित रसना जलीय इन्द्रिय है । अन्य सभी जल विषय रूप हैं ।

तेजसः किं लक्षणम् ? के च भेदाः—

**उष्णस्पर्शवत्तेजः । तच्च द्विविधम् । नित्यमनित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अबिन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ॥**

सीता ।

तेजसः किं लक्षणम् कति च भेदा इति जिज्ञासायामाह -मूले उष्णस्पर्शवदिति । उष्णपदानुपादाने जल आदावतिव्याप्तिः अतः तदुपात्तम् । अत्रापि उष्णसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वमर्थो बोध्यः । तेन न प्रागिव उत्पत्तिकालीनतेजस्यव्याप्तिः । प्रसिद्धं शास्त्र पुराणादौ इतिशेषः । रूपग्राहकमित्यत्र रूपदानुपादाने घ्राणादावतिव्याप्तिः तेषामपि गन्धादीनां ग्राहकत्वात् । भौमं च दिव्यं च उदर्यं च आकरजं च इति भौमदिव्योदर्याकरजानि तेषां भेदात् इत्यर्थः । भौमं भूमिसम्बन्धि । आपः एव इन्धनानि दीपनानि यस्य तत्

अविन्धनम् । परिणामः जीर्णता परिपाक इति यावत् । तस्य हेतुः कारणम् अन्नादिपाचकमितिभावः । आकरेषु खनिसु जायते इति आकरजम् ।

पद्मा ।

जिसमें उष्णस्पर्श है वह है तेज । वह भी दो प्रकार है नित्य और अनित्य । अनित्य तेज, शरीर इन्द्रिय और विषय इन भेदों से तीन प्रकार है । सूर्य्य आदि देवताओं के शरीर तैजस हैं । कृष्णसार गोलक के आगे विद्यमान आँख है तैजस इन्द्रिय । विषयरूप तेज भौम दिव्य उदर्य्य और आकरज इन भेदों से चार प्रकार है । पृथ्वी पर होनेवाली आग आदि भौम है । जल से दीप्त होनेवाली विद्युत् प्रभृति दिव्य हैं । खाये हये अन्न जल आदि को पचानेवाला उदर्य्य है । और खानों से निर्गत सुवर्ण आदि आकरज हैं । यहाँ भी उष्णस्पर्शवत्त्व का अर्थ उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्व समझना चाहिये । जाति पद से तेजस्त्व को लेकर सब तेजों में लक्षण समन्वय समझना चाहिये ।

वायोः किं लक्षणम् ? के च भेदाः —

**रूपरहितः स्पर्शवान्वायुः । स द्विविधः । नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यःकार्यरूपः । पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसंज्ञां लभते ।**

( न्या० ) एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयतिरूपरहित इति । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । सति सप्तम्या विशिष्टार्थकतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् । विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः । तद्वारणाय विशेषणोपादानम् । तावन्मात्रोपादाने आका-

शादावतिव्याप्तिः। तद्वारणाय विशेष्योपादानम्। अतिव्याप्तिर्नाम अलक्ष्य लक्षणसत्त्वम्। यथा गोः शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात्। अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः। यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात्। असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्। यथा गोरेकशफवत्त्वम्। गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वात्। अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानि-लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः। अव्याप्तिस्तुलक्ष्यतावच्छेदकसामानाधिकरणात्यन्ताभावप्रतियोगित्वम्। असम्भवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्।

## सीता।

वायोः किं लक्षणम् कतिच भेदाः इत्याकांक्षायामाह मूले—रूपरहितेत्यदि। स्पर्शं ग्राहयति इति स्पर्शग्राहकं। त्वक्=त्वङ्-नामकं। सर्वस्मिन् शरीरे वर्त्तते इति सर्वशरीरवर्त्ति। सर्वस्मिन् इत्यस्य पुरीतन्नामकनाड्यतिरिक्ते सर्वत्रेत्यर्थः तेन नासङ्गतिः। वृक्षादीनां यत् कम्पनं चलनं तस्य हेतुः कारणम् इत्यर्थः। शरीरस्य अन्तः मध्ये सञ्चारः अस्ति अस्य इति शरीरान्तः सञ्चारी। सच= प्राणश्च। उपाधिभेदात्=हृदयादिस्थानभेदात्। न्यायबोधिन्याम् मूलार्थं विवृणोति रूपरहितत्वेसतीति। सप्तम्या विशिष्टार्थकत्वे रूपरहितत्वविशिष्टस्पर्शवत्त्वम् वायोर्लक्षणम् इत्यर्थः। तत्ररूपरहितत्वांशं स्फुटीकृत्य समुदितार्थमाह सामानाधिकरण्यसम्बधेनेत्यादि। तथाच रूपत्वावच्छिन्ना या प्रतियोगिता तन्निरूपकोयः अभावः सामानाधिकरण्यसम्बन्धेन तद्विशिष्टः यः स्पर्शः तद्वत्वं वायोः लक्षणम् इति समुदितार्थः। वायो "रूपंनास्ति इति अभावः अप्यस्ति स्पर्शश्चास्ति इति द्वयोः एकाधिकरणे विद्यमानतया सामानाधिकरण्यसम्बन्धेन रूपाभावविशिष्टत्वं वायुस्पर्शस्य इति तादृशस्पर्शवत्वं वायौ अस्तीति लक्षण समन्वयः। लक्षणे स्पर्शवत्त्वानुपादाने आकाशादौ

अतिव्याप्तिः रूपाभावस्य तेषु सत्त्वात् । रूपाभावानुपादाने स्पर्शस्य पृथिव्यादौ सत्त्वेन अतिव्याप्तिः स्यात् इतिभावः । अतिव्याप्तिं, अव्याप्तिं, असम्भवं च सरलतया बोधयति अतिव्याप्तिर्नामेति । निष्कृष्टलक्षणानि = पर्य्यवसितलक्षणानि । अतिव्याप्तेः तथा लक्षणमाह—लक्ष्यतावच्छेदकसमानेत्यादि । लक्ष्यतावच्छेदकाधिकरणे विद्यमानत्वेसति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकेन भेदेन सह सामानाधिकरण्यम् । तादृशभेदाधिकरणवृत्तित्वमित्यर्थः । यथा गोः शृङ्गित्वस्य लक्षणत्वे, तादृशे शृङ्गित्वे लक्ष्यतावच्छेदकस्य गोत्वस्य सामानाधिकरण्यं विद्यते । यतः गोत्वं शृङ्गित्वं च उभयमपि गवि विद्यते । एवं लक्ष्यतावच्छेदकीभूतगोत्वावच्छिन्नप्रतियोगिताकेन "गौर्न" इति भेदेन सह सामानाधिकरण्यमपि विद्यते शृङ्गित्वस्य । यतः महिषे 'गौर्न' इति भेदोपि भवति शृङ्गित्वमपिचेति शृङ्गित्वे गोत्वसामानाधिकरण्यस्य गोभेदसामानाधिकरण्यस्य च सत्त्वेनातिव्याप्तिलक्षणसमन्वयः । अव्याप्तेः पर्य्यवसितलक्षणमाह अव्याप्तिस्तुलक्ष्यतावच्छेदकेत्यादि । लक्ष्यतावच्छेदकस्याधिकरणे विद्यमानस्यात्यन्ताभावस्य प्रतियोगित्वम् इति तस्य सरलार्थः । यथा नीलरूपवत्त्वं गोर्लक्षणमित्युक्तौ नीलरूपवत्त्वस्य नीलगवि लक्ष्यतावच्छेदकीभूतस्य गोत्वस्याधिकरणे विद्यमानतया, पीतगवि च गोत्वाधिकरणे तदत्यन्ताभावस्य विद्यमानत्वेन तादृशात्यन्ताभावस्य प्रतियोगितया च तत्राव्याप्तिलक्षणसङ्गतिः । असम्भवस्य निष्कृष्टं लक्षणमाह—असम्भवस्तुलक्ष्यतावच्छेदकेत्यादि । यत्र यत्र लक्ष्यतावच्छेदकधर्म्मः तत्र तत्र विद्यमानः अभावः लक्ष्यतावच्छेदकव्यापकीभूतोऽभावः तस्यप्रतियोगित्वम् इति सरलार्थः । यत्र यत्र गोत्वं तत्र तत्र एकसफवत्त्वस्याभावसत्त्वेन तत्प्रतियोगित्वस्य एकसफवत्त्वे सत्वात् एकसफवत्त्वं गोर्लक्षणम् इत्यत्र एकसफवत्वे असम्भवलक्षणसमन्वयः इतिभावः । "सास्नावत्त्वं गोर्लक्षणम्" इत्यत्र च नास्ति दोषत्रयम् ।

पद्मा ।

जिसमें रूप न हो किन्तु स्पर्श हो वही है वायु । उसका भी नित्य अनित्य आदि प्रभेद पूर्ववत् समझना चाहिये । प्राण अपान आदि वायु भी विषयरूप वायु के ही अन्तर्गत है यह बतलाते हैं मूल में शरीरान्तः सञ्चारी

इत्यादि। वह प्राण ही शरीर के विभिन्न स्थानों में रहने के कारण प्राण अपान समान उदान और व्यान कहलाता है। प्राण हृदय में, अपान गुदा में समान नाभि देश में, उदान कंठ में और व्यान समस्त शरीर में रहता है। न्यायबोधिनी में लक्ष्यतावच्छेदक इत्यादि से अतिव्याप्ति अव्याप्ति और असम्भ का पर्य्यवसित लक्षण बतलाया गया है। जो लक्ष्यतावच्छेदक के किसी अधिकरण में भी रहे और लक्ष्यतावच्छेदकावच्छिन्न के भेद के अधिकरण में भी रहे वह अतिव्याप्ति दोषसे युक्त होनेके कारण लक्षण नही हो सकता। शृंग गोत्व के अधिकरण गैए में भी है और गोत्वावच्छिन्न गो के भेद से युक्त भैंस मे भी है अतः गैए का लक्षण नही हो सकता। जो धर्म्म लक्ष्यतावच्छेदक के अधिकरण मे रहे और लक्ष्यतावच्छेदक के किसी अधिकरण मे उसका अभाव भी रहे वह अव्याप्तिदोष से युक्त होने के कारण लक्षण नही हो सकता। जैसे नीलरूप गैए का लक्षण नही कहा जा सकता। क्योंकि वह गोत्व के अधिकरण नील गैए मे तो रहता है किन्तु गोत्व के अधिकरण शुक्ल गैए में उसका अभाव भी रहता है। जिस धर्म्म का अभाव सर्वत्र लक्ष्यताव-च्छेदक के अधिकरण मे रहे वह असम्भव दोष से युक्त होने के कारण लक्षण नही हो सकता। जैसे एक खुर गैए का लक्षण नही हो सकता क्यों कि गोत्व जहाँ जहाँ है सभी गैए मे खुर का अभाव है। अतः वह उस अभाव का प्रतियोगी है।

आकाशस्य किं लक्षणम् ?—

**शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यं च**

( न्या० ) आकाशं लक्षयति—शब्दगुणकमिति। गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय नत्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात्। तच्चैकमिति। अनेकत्वे मानाभावादिति भावः। विभ्विति। सर्वमूर्त्तद्रव्यसंयोगित्वं विभुत्वम्। मूर्त्तत्वं च क्रियावत्त्वम्। पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि। पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं भूतपदवाच्यम्। भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्॥

सीता।

आकाशस्य किं लक्षणं कतिविधंच तत् इति जिज्ञासायामाहमूले-शब्दगुणेति। अत्रसमवायेन शब्दवत्त्वमाकशत्वम् एतावन्मात्रेण

निर्वाहे लक्षणे न गुणपदप्रवेशः इति "अत्रगुणपदमाकाशे" इत्यादि न्यायबोधिन्यभिप्रायः। शब्दस्य विशेषगुणत्वे प्रमाणमाह—रूपंगन्ध-इत्यादि। विभुत्वं स्पष्टयति सर्वमूर्त्तेत्यादि। सर्वेषु मूर्त्तद्रव्येषु पृथिव्यप्तेजो वायुमनस्सु संयोगः अस्यास्तीति सर्वमूर्त्तद्रव्यसंयोगि तस्यभावः तत्त्वम्। व्यापकस्य अकाशादेः संयोगस्य सर्वेषु पृथिव्यादिषु सत्त्वात् पृथिव्यादीनां मूर्तत्त्वम् इतिभावः बहिरिन्द्रियैः चक्षुरादिभिः ग्राह्याः ग्रहीतुं योग्याः विशेषगुणाः गन्धादयः तद्वत्त्वं पृथिव्यादीनां आकाशान्तानां इति ते बहिरिन्द्रियग्राह्यविशेषगुणवन्तः तत्त्वं भूतत्वं तेषामित्यर्थः।

पद्मा।

शब्द गुण जिसमें रहता है उसका नाम है आकाश। वह एक है और व्यापक है और नित्य भी है। एक इसलिए है, कि अनेक मानने का कोई भी प्रयोजन नहीं। व्यापक इसलिए है, कि वह समस्त पृथिवी जल तेज वायु और मन इनसे संयुक्त होता है। पृथिवी जल तेज वायु और मन ये कहलाते हैं मूर्त्त। क्योंकि क्रिया के आश्रय येही होते हैं। पृथिवी जल तेज वायु और आकाश ये भूत कहलाते हैं। क्योंकि इनके विशेषगुण गन्ध रस रूप स्पर्श और शब्द, नाक आदि पाँच इन्द्रियों से गृहीत होते हैं।

कालस्य किं लक्षणम्? के च भेदाः—

**अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥**

(न्या०) कालं लक्षयति—अतीतेति। व्यवहारहेतुत्वस्य लक्षणत्वे घट इत्यादिव्यवहारहेतुभूतघटादावतिव्याप्तिः। तद्वारणाय अतीतादीति विशेषणोपादानम्॥

सीता।

कालस्य किं लक्षणं कतिच भेदाः इतिजिज्ञासायामाह मूले—अतीतादिव्यवहारेति। अयं अतीतः अयं वर्त्तमानः, अयं भावी इत्यादिर्यो व्यवहारः वाक्यप्रयोगः तद्धेतुत्वं कालस्य लक्षणम्। अतीतादिपदं किमर्थम् इति जिज्ञासायामुक्तं न्यायबोधिन्यां व्यवहारहेतुत्वस्येत्यादि। यदि व्यवहारहेतुत्वं कालत्वम् एतावदेवोक्तं भवेत् तदा "अयंघटः" इति व्यवहारं, आदाय घटे कालत्वापत्तिः स्यात् इति तदर्थः।

पद्मा।

"था" "है" "होगा" इस प्रकार "वाक्यप्रयोग" रूप व्यवहार जिस द्रव्य के सहारे हो, जो उक्त व्यवहार के प्रति कारण हो वही है काल। यदि "व्यवहार हेतु" काल है" इतना ही कहा जाय तो "यह घट है" इस प्रकार व्यवहार लेकर घट आदि भी काल कहलाने लगेंगे अतः मूल में 'अतीतादि" कहा गया है। जिसका अर्थ है 'था" "है" "होगा"।

दिशो लक्षणं भेदश्च—

**प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च॥**

(न्या०) दिशो लक्षणमाह—प्राच्येति। उदयाचलसन्निहिता या दिक् सा प्राची। अस्ताचलसन्निहिता या दिक् सा प्रतीची मेरोः सन्निहिता या दिक् सोदीची। मेरोर्व्यवहिता या दिक् साऽवाची॥

सीता।

दिशः किं लक्षणं कतिविधा च सा इति जिज्ञासायामाह—मूले प्राच्यादीति। प्राच्यादिव्यवहारहेतुत्वम् दिशः लक्षणम् इत्यर्थः। अत्रापि प्राच्यादि इतिपदानुक्तौ घटादौ अतिव्याप्तिः अत; तदुक्तम्। प्राच्यादेः परिचयमाह न्यायबोधिन्याम् उदयाचलसन्निहितेत्यादि। उदयाचलः सूर्य्योदयपर्वतः। अस्ताचलः सूर्य्यास्तपर्वतः। मेरुः वर्षसंज्ञकसर्वदेशोत्तरवर्त्ती कनकपर्वतः। एकत्वनित्यत्वविभुत्वानि आकाशवत् दिशो बोध्यानि।

पद्मा।

'यह पूरब है" "यह पश्चिम है" "यह दक्षिण है" "यह उत्तर है" इत्यादि व्यवहार जिस द्रव्य से हो उसका नाम है दिक्। जिसे दिशा कहते है। वह चार प्रकार है प्राची प्रतीची उदीची और अवाची। अर्थात् पूर्व पश्चिम उत्तर और दक्षिण। जिधर सूरज उगता है वह है पूर्व और जिधर डूबता है वह है पश्चिम सुमेरू पर्वतकी ओर है उत्तर और उसके विपरीत दिशा है दक्षिण।

आत्मनो लक्षणं भेदश्च—

**ज्ञानाधिकरणमात्मा। स द्विविधः। जीवात्मा**

परमात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥

(न्या०) आत्मानं निरूपयति—ज्ञानाधिकरणमिति अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम्॥

सीता

आत्मनः किं लक्षणं कतिविधश्च सः इति जिज्ञासायामाह मूले ज्ञानाधिकरणेत्यादि। ज्ञानस्य अधिकरणम् ज्ञानाधिकरणम् इति षष्ठी समासः। तथाच समवायसम्बन्धेन ज्ञानाश्रयत्वं आत्मनो लक्षणम् इत्यर्थः। समवायेनेत्यनुक्तौ ज्ञानस्य विषयता सम्बन्धेन घटादौ अपि सत्त्वात् तत्र तत्रातिव्याप्तिः। विभज्य परमात्मनो लक्षणमाह मूले तत्रेश्वरः सर्वज्ञइति। तथाच समवायसम्बन्धेन सकल पदार्थविषयकज्ञानवत्त्वम् परमात्मनोलक्षणम्। लाघवात्तस्य एकत्वम् स्वीकरणीयमित्युक्तं एकएवेति। जीवं परिचाययति जीवस्त्विति। परमात्मनः सर्वज्ञत्वकथनेनजीवात्मनः किञ्चिज्ज्ञत्वम् अर्थत एव प्राप्तम्। तथाच सवायसम्बन्धेन किञ्चिन्मात्रविषयकज्ञानाश्रयत्वम् जीवस्य लक्षणं इति फलितम्। सुखदुःखादिवैचित्र्यसम्पादनाय तस्य अनेकत्वं स्वीकरणीयम् इतिप्रतिपादितम् प्रतिशरीरं भिन्न इत्यनेन। विभुत्वं नित्यत्वं च जीवात्मपरमात्मनोः उभयोः।

पद्मा

जिसमें ज्ञान समवाय सम्बन्ध से रहे वह है आत्मा। वह दो प्रकार है परमात्मा और जीवात्मा। परमात्मा अर्थात् परमेश्वर वह है जो सब कुछ जानता है। और जीव वह है जो सब तो नहीं किन्तु कुछ जानता है परमात्मा एकमात्र है किन्तु जीव शरीर भेद से भिन्न हैं। अर्थात् अनन्त हैं। नित्य और व्यापक जीवात्मा तथा परमात्मा दोनों हैं। जीव जीवात्मा, प्राणी ये शब्द पर्यायवाची हैं। जीव भी दो प्रकार होते हैं बद्ध और मुक्त। बद्ध वे कहलाते हैं जो सुख दुःख भोगते हैं। और मुक्त वे होते हैं जो शरीर रहित होने के कारण सुख दुःख से रहित हो जाते हैं।

मनसो लक्षणं भेदश्च—

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च॥**

(न्या०) मनो निरूपयति—सुखादीति। उपलब्धिर्नामसाक्षात्कारः। तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम्। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः। अतः सुखादिसाक्षात्कारकारणत्वविशेषणम्। विशेष्यानुपादाने आत्मन्यतिव्याप्तिः। आत्मनः सुखादिकं प्रति समवायिकारणत्वात्। अतः इन्द्रियत्वरूपविशेष्योपादानम्॥

सीता

मनसः किं लक्षणम् कतिविधं च तत् इतिजिज्ञासायामाह मूले सुखाद्युपलब्धीति। सुखादेः या उपलब्धिः "अहंसुखी" "अहंदुःखी" इत्यादिसाक्षात्कारः तस्य साधनं कारणं यत् इन्द्रियं तत् मनः इति तदर्थः। प्रत्यात्मनियतत्वात् = प्रत्येकस्य आत्मनः कृते स्वीयतया अपेक्षितत्वात्। अनन्तम्-जीवात्मसमसंख्याकम्। परमाणुरूपम् = परमाणुत्वपरिमाणवत्। नित्यम् = ध्वंसाप्रतियोगि। न्यायबोधिन्याः अयं सारार्थः—"अहंसुखी" इत्यादि मानसप्रत्यक्षकारणत्वे सति इन्द्रियत्वम् मनसः लक्षणम्। तत्र इन्द्रियत्वं मनसः लक्षणम् एतावदुक्तौ चक्षुरादेः मनस्त्वापत्तिः। इन्द्रियत्वानुक्तौ च आत्मनि मनस्त्वापत्तिः। आत्मनः "अहं सुखी" इति साक्षात्कारं प्रति समवायिकारणत्वात् इति।

पद्मा

जो इन्द्रिय सुख दुःख आदि के प्रत्यक्ष में कारण हो उसका नाम है मन। जैसे आँख से रूप का नाक से गन्ध का प्रत्यक्ष होता है, उसी प्रकार "मैं सुखी हूँ" "मैं दुःखी हूँ" यह सुख दुःख का प्रत्यक्ष भी किसी इन्द्रिय से होगा। अतः जिससे उक्त प्रत्यक्ष होता है वही है मन। वह प्रत्येक जीवों के लिए एक एक नियत है अतः अनन्त है। किन्तु एक काल में अनेक प्रत्यक्ष न होने के कारण उसे परमाणु के समान अति क्षुद्र माना जाता है। अतएव वह नित्य भी होता।

रूपस्य किं लक्षणम् ? के च भेदाः—

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ॥**

(न्या०) रूपं लक्षयति—चक्षुरिति । चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम् । विशेष्यमात्रोपादाने रसादावतिव्याप्तिः। अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम् । तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः । यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्येति नियमात्तद्वारणाय विशेष्योपादानम् । चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् । मात्रपदानुपादाने संख्यादि सामान्यगुणेऽतिव्याप्तिः, चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात् । अतस्तद्वारणाय मात्रपदं, संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति । अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति । अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम् । अग्राह्यत्वं नाम तदविषयत्वम् । तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वमिति फलितोऽर्थः । ननु प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न । गुणपदस्य विशेषगुणपरत्वात् । न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम् ? जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात् । अथवा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः । संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् । घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् । अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम् । एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः । अतो विशेषणविशेष्ययोरुपादानम् ॥

सीता

रूपस्य किं लक्षणम् कतिविधं च तत् इति जिज्ञासायामाह मूले—चक्षुर्मात्रेति। तच्च = रूपंच। सप्तविधं इत्यनेनान्वयः। भेदात् इत्यस्य प्रत्येकं सम्बन्धात् नीलभेदात् पीतभेदात् इत्येवं, अर्थो बोध्यः। अभास्वरशुक्लं = अप्रकाशकशुक्लं। भास्वरशुक्लं प्रकाशकशुक्लं। अत्रन्यायबोधिन्या अयं सारांशः-चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वं रूपस्य लक्षणम्। तत्र चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं एतावदुक्तौ संयोगादौ अतिव्याप्तिः तस्यापि चक्षुषा प्रत्यक्षात्। चक्षुर्भिन्नेन्द्रियेत्याद्युक्तौ च संयोगादेः त्वगिन्द्रियेणापि ग्रहणात् भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वाभावेन नातिव्याप्तिः। यदि चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वमेव नोक्तं स्यात् गुरूत्वादौ अतीन्द्रिये रूपलक्षणस्य अतिव्याप्तिः अतः तदपि देयम्। गुणत्वानुपादाने रूपत्वे जातौ अतिव्याप्तिः। गुणपदं तु विशेषगुणपरं तेन प्रभाघटसंयोगेऽतिव्याप्तेर्वारणम्। जलमात्रवृत्तिसांसिद्धिकद्रवत्वस्यापि चक्षुस्त्वग्भ्यां ग्राह्यत्वात् मात्र पदेन तद्वारणम्। लघुलक्षणापेक्षा चेत् चक्षुर्मात्रग्राह्यजातिमद् गुणत्वं रूपस्य लक्षणं बोध्यम्। अत्र गुणत्वानुपादाने सुवर्णद्रव्येऽतिव्याप्तिः "अयं सुवर्णं" इति प्रत्यक्षस्य चक्षुर्मात्रजन्यतया सुवर्णत्वजातेरपि तादृशजातित्वेन तदाश्रयत्वस्य सुवर्णद्रव्ये सत्वात् इति। विहितं विशेष्यविशेषणपदप्रयोजनविचारं लक्षणान्तरेऽपि सञ्चारयति एवं रसादिलक्षणं इत्यादि।

पद्मा

जिस गुण को केवल आँख से देखा जाय वह है रूप। रूपत्व भी आँख से देखा जाता है किन्तु वह गुण नहीं है। रस आदि गुण तो हैं किन्तु आँख से देखे नहीं जाते हैं। संख्या परिमाण संयोग आदि सामान्य गुण, गुण भी हैं और आँख से देखे भी जाते हैं किन्तु केवल आँख से नहीं देखे जाते हैं त्वचा से भी, अतः कोई दोष नहीं है। रूप शुक्ल नील पीत रक्त हरित कपिश और चित्र भेद से सात प्रकार हैं। कोई भी रूप पृथिवी जल और तेज इतने में ही रहते हैं, वायु आदि में नहीं। विभिन्न पार्थिव द्रव्यों में किंवा काल भेद से एक पृथिवी में भी उक्त सातो प्रकार रूप रहते हैं। अन्य में नहीं। जल

में केवल अप्रकाशक शुक्ल और तेज में प्रकाशक शुक्लरूप रहता है न्याय बोधिनीकार ने अन्त में यह कहा है कि जो जाति केवल चक्षुर्ग्राह्य हो तादृश जातिवाला गुण रूप होता है। रूपत्व जाति ऐसी है और वह रूप में ही है अतः तादृशजातिमान् गुण रूप है।

रसस्य लक्षणं तद्भेदश्च—

**रसनग्राह्यो गुणो रसः। स च मधुराम्ललवण-कटुकषायतिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः तत्र पृथिव्यां षड्विधः। जले मधुर एव॥**

सीता

रसस्य किं लक्षणं ? कतिविधश्च सः इतिजिज्ञासायामाह मूले-रसनग्राह्यति। रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणं इत्यर्थः। गुणत्वमात्रोक्तौ रूपस्पर्शादौ अतिव्याप्तिः। गुण-त्वानुक्तौच रुपत्वे अतिव्याप्तिः अतः विशेष्यविशेषणोभयदलप्र-वेशः। सच=रसश्च। अत्रापि भेदादित्यस्य प्रत्येकमन्वयात् मधुर-भेदात् अम्लभेदात् इत्येवं व्याख्येयम्। पृथिवीच जलंचइति पृथि-वीजले, तयोः वर्त्तते इति पृथिवीजलवृत्तिः। षड्विधः मधुरादि-भेदन भिन्नः रसः। वर्त्तते इतिशेषः।

पद्मा

जिस गुण को जिह्वा से समझा जाता है वही है रस। उसके प्रभेद छः हैं जैसे—मधुर अम्ल लवण कटु कषाय और तिक्त। रस पृथिवी और जल इन दो द्रव्यों में ही रहता है। पृथिवी में यथासम्भव उक्त छः प्रकार रस रहते हैं। और जल में केवल मधुर ही रस रहता है। नीबू के रस में जो अम्लरस पाया जाता है वह पार्थिव अंशकाही होता है।

गन्धस्य लक्षणं तद्भेदश्च—

**घ्राणग्राह्यो गुणो गन्धः। स द्विविधः। सुरभिर-सुरभिश्च। पृथिवीमात्रवृत्तिः॥**

सीता।

गन्धस्य किं लक्षणम् कश्च तस्य भेदः इतिजिज्ञासायामाह मूले—घ्राणग्राह्येति । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वेसति गुणत्वम् गन्धस्य लक्षणम्। अत्रापि गुणत्वानुक्तौ रसत्वजातौ अतिव्याप्तिः। तावन्मात्रोक्तौच रुपादिषु अतिव्याप्तिः अतः विशेष्यविशेषणोभयदलम्। सुरभिः सुगन्धः, असुरभिः दुर्गन्धः। पृथिवीमात्रवृत्तिः = पृथिव्यां एव वर्त्तते इत्यर्थः।

पद्मा

जिस गुण का प्रत्यक्ष नाक से होता है वह है गन्ध। उसके दो प्रभेद हैं सुगन्ध और दुर्गन्ध। दोनों प्रकार गन्ध केवल पृथिवी में ही रहता है। केवड़ाजल गुलाबजल आदि के गन्ध केवड़ा गुलाब आदि फूलों के ही होते हैं जल के नहीं।

स्पर्शस्य किं लक्षणम् ? के च भेदाः—

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः॥**

(न्या०) स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति। अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय। अन्यविशेषणकृत्यं पूर्ववद्बोध्यम्। ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः॥

सीता।

स्पर्शस्य किं लक्षणं केच भेदाः इतिजिज्ञासायामाह मूले—त्वगिन्द्रियमात्रेति । त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वेसति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वेसति गुणत्वम् स्पर्शस्य लक्षणमित्यर्थः। अत्रगुणत्वमात्रोपादाने रूपादौ अतिव्याप्तिः। तदनुपादाने स्पर्शत्वे अतिव्याप्तिः। त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वेसतिगुणत्वं एतावदुक्तौ

संख्यापरिमाणादौ अतिव्याप्तिः तेषां अपि त्वचा ग्राह्यत्वात्। त्वग्-भिन्नेत्यादिविशेषणस्योपादानेतु न तेषु अतिव्याप्तिः । त्वग्भिन्नेन चक्षुषाऽपि तेषां प्रत्यक्षात् । इममेवार्थमाह न्यायबोधिन्याम् अत्रापिमात्रपदं संख्यादीत्यादिना ।

**पद्म**

जिस गुण का प्रत्यक्ष केवल त्वगिन्द्रिय से अर्थात् त्वचा से होता है वह है स्पर्श। रूपआदिगुण त्वचा से ज्ञात नहीं होते हैं। स्पर्शत्व त्वगिन्द्रिय-ग्राह्य तो है किन्तु गुण नहीं है। संख्यापरिमाण आदि त्वगिन्द्रिय से गृहीत होते हैं सही किन्तु केवल त्वगिन्द्रिय से नहीं अतः अव्याप्ति अतिव्याप्ति आदि कोई दोष नहीं है। स्पर्श तीन प्रकार हैं शीतल उष्ण और अनुष्णाशीत। शीतल स्पर्श जल में है। उष्ण अर्थात् गरम स्पर्श तेज में है। और अनुष्णाशीत स्पर्श पृथिवी और वायु इन दोनों में । पृथिवी में पाकज अनुष्णाशीत है और वायु में अपाकज अनुष्णाशीत। यहाँ भी "त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षा-विषयत्वेसति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्व" स्पर्श का परिष्कृत लक्षण समझना चाहिये।

रूपरसगन्धस्पर्शाः कुत्र पाकजाः कुत्राऽपाकजा वेति—

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्रापाकजं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम् ॥**

(न्या०) रूपादिचतुष्टयमिति । एतत्तत्त्वनिर्णयश्चेत्थम् । पाको नाम विजातीयतेजःसंयोगः । स च नानाजातीयरूपजनको विजातीयस्तेजःसंयोगः । तदपेक्षया रसजनको विजातीयः एवं गन्धजनकोऽपि ततो विजातीय एव । एवं स्पर्शजनकोऽपितथैव। एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। यथा तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्व-हरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्ति र्नतु रसादेरुत्पत्तिः। पूर्वरसस्याम्लस्यैवानुभवात्। क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरा-वृत्तिर्दृश्यते। विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन

मधुररसस्यानुभवात्। तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः। एवं गन्धजनको विलक्षण एव। रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि विजातीयपाकवशात्सुरभिगन्धोपलब्धेः। एवं स्पर्शजनकोऽपि। पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्। तस्माद्रूपादिजनका विजातीया एव पाकाः। अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्त्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते। तदुत्तरं तादृशरूपरसादय उत्पद्यन्ते। तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते। ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः। एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमितिदिक्॥

सीता।

रुपरसगन्धस्पर्शाः कुत्र पाकजाः भवन्ति कुत्रचापाकजाः इति जिज्ञासायामाह मूले—रूपादिचतुष्टयमिति। "पाकजमनित्यञ्चे" तिमूले अनित्यमित्यस्य ध्वंसप्रतियोगीत्यर्थः। तेन नोक्तिवैयर्थ्यम्। अन्यत्र=जलादौ। नित्यगतं=नित्यवृत्ति। एवमनित्यगतमित्यपि। न्यायबोधिन्यां पाकलक्षणमाह—पाकोनामेति। विजातीयत्वं विलक्षणत्वं तच्च संयोगविशेषणम्। भिन्नभिन्नजातीया=वैलक्षण्यवन्तः। पाकाः =अग्निसंयोगाः। कार्य्यवैलक्षण्येनच=विलक्षणकार्य्यजनकतया। कल्पनीयाः अनुमेयाः। रूपादिपरावर्त्तकाः संयोगाः विलक्षणाः विलक्षणकार्य्यकारित्वादित्यनुमानम्। अवयविपाकवादिनाम् मतेन दृष्टान्तमाह—यथातृणपुञ्जनिःक्षिप्तेति। एतादृशस्थले युगपदेव रूपरसगन्धस्पर्शानां चतुर्णां परावृत्तिर्नहि दृश्यते अतः अगत्या रूपपरावृत्तौ अन्यस्याग्निसंयोगस्य, रसपरावृत्तौ चान्यस्य कारणत्वं वक्तव्यमेवेति भावः। उपसंहरति तस्माद्रूपजनकेति। पाकवैजात्ये युक्त्यन्तरमाह अतएव पार्थिवेति। यदिपाकवैलक्षण्यं न स्यात् कथं स्यात् एकजातीयैरेव परमाणुभिः विलक्षणरूपादिमतां द्रव्याणामारम्भ इतिभावः। परमाणुपाकमनुसृत्याह—यथागोभुक्ततृणादीना

मित्यादि । तैस्तैरेव परमाणुभिः तृणदुग्धदधिनवनीतानामारम्भेऽपि अनुभूयमानं वैजात्यं नान्तरेण पाकवैजात्यं भवितुमर्हतीतिभावः ।

पद्मा ।

रूप रस गन्ध और स्पर्श ये चारो गुण पृथिवी में पाक से उत्पन्न होते हैं अतएव अनित्य अर्थात् नश्वर होते हैं । जल आदि के रूप प्रभृति पाकज नहीं होते हैं और नित्य अनित्य भेदों से दो प्रकार होते हैं । जलीय तैजस ओर वायवीय परमाणुओं में वे नित्य होते हैं । द्व्यणुक आदि में अनित्य होते हैं । पृथिवी में पाकज हों या अपाकज कोई भी नित्य नहीं होते । क्योंकि नित्य पार्थिव परमाणु के भी रूपादि पाक से बदल जाते हैं । पट आदि के रूप आदि अपाकज होते हैं । न्यायबोधिनीकार कहते हैं कि रूप रस आदि चारो की परावृत्ति एक अग्नि संयोग स्वरूप पाक से नहीं होता । क्योंकि फूस में रखे हुए आम के रूप रस गन्ध और स्पर्श युगपत् नहीं बदलते हैं । पाक की महिमा अद्भुत है । उसकी विचित्रता से तृण दूध दही माखन घी आदि के उपादान परमाणु पार्थिव होने पर भी, वे विलक्षण पाकों से उत्पन्न रूप रस आदि युक्त परमाणु से, द्व्यणुकादि क्रम से उत्पन्न होकर विलक्षण प्रतीत होते हैं ।

संख्यायाः किं लक्षणम् ? कुत्र च सा तिष्ठतीति—

**एकत्वादिव्यवहारहेतुः संख्या । सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥**

सीता ।

संख्यायाः किं लक्षणम्, कुत्र च सा वर्त्तते इति जिज्ञासायामाह मूले एकत्वादीति । अयमेकः इमौद्वौ इत्यादिव्यवहारहेतुगुणत्वम् संख्यायाः लक्षणमित्यर्थः । एकत्वादिपदानुक्तौ घट इतिव्यवहारहेतौ घटादौ अतिव्याप्तिः । हेतुपदं असाधारणकारणीभूतगुणपरम् । तेन न कालेश्वरेच्छादौ अतिव्याप्तिः । एकत्वादिपरार्द्धपर्य्यन्ता = एकत्वमारभ्य परार्द्धपर्य्यवसाना । नित्यगतं = परमाण्वाकाशादि-गतम् । अनित्यगतं = घटादिगतम् । द्वित्वत्रित्वादीनां अयमेकः अय-

मेकः इत्याद्यपेक्षाबुद्धिजन्यतया न नित्यत्वमित्याशयेनाह द्वित्वादि-कमित्यादि ।

पद्मा ।

"यह एक है" "ये दो है" इत्यादि वाक्य-प्रयोग अथवा ज्ञान के प्रति असाधारण कारण होने वाला गुण है संख्या । यह पृथिवी आदि सभी द्रव्यों में रहती है । एकत्व से लेकर "परार्द्ध" पर्यन्त संख्यायें होती हैं । इन्ही के सहारे पदार्थों को गणना होतो है । परमाणु आकाश आदि नित्यों में रहने वाले एकत्व होते हैं नित्य और घट आदि मे अनित्य । द्वित्व त्रित्व आदि संख्यायें नित्य मे रहनेवाली हों अथवा अनित्य मे सभी अनित्य होती हैं ।

परिमाणस्य किं लक्षणम् ? के च भेदाः—

**मानव्यवहारासाधारणं कारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम् । अणु महद्दीर्घं ह्रस्वं चेति ॥**

सीता

परिमाणस्य किं लक्षणम् केच तस्य भेदाः इतिजिज्ञासायामाह मूले—मानव्यवहारेत्यादि । इयान् एतावान् इतिव्यवहारो मानव्यवहारः तदसाधारणकारणत्वेसतिगुणत्वम् परिमाणस्य लक्षणमित्यर्थः । अत्रापि मानपदानुक्तौ "घट" इत्यादिव्यवहारयादाय घटादौ अतिव्याप्तिः । अणु महत् दीर्घं ह्रस्वं इत्यस्य अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं इत्यर्थः ।

पद्मा ।

यह वस्तु इतनी है, यहाँसे यहाँतक है छोटा है बड़ा है इत्यादि व्यवहार के प्रति जो गुण असाधारण कारण हैं वही है परिमाण । इसके चार प्रभेद हैं अणुत्व दीर्घत्व महत्त्व और ह्रस्वत्व । परिमाण सभी द्रव्यों में रहता है

पृथक्त्वस्य किं लक्षणम् ?

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

सीता

पृथक्त्वस्य किं लक्षणम् कुत्र च तत् तिष्ठति इतिजिज्ञासायामाह मूले—पृथग्व्यवहारेति । घटः पटात् पृथक् इत्यादिर्यो व्यवहारः तदसाधारणकारणत्वं पृथक्त्वस्य लक्षणं इत्यर्थः । अत्रापि पृथक्पदानुपादाने घटादिषु अतिव्याप्तिर्बोध्या । इदमपि पृथिव्यादि सकलद्रव्येषु तिष्ठति एकत्वद्वित्वादिवत् एकपृथक्त्वद्विःपृथक्त्वादिभेदः अत्रापि बोध्यः ।

पद्मा ।

"वह इससे पृथक् है" "ये दोनों पृथक् हैं" इत्यादि व्यवहार जिस गुण के सहारे हो वही है पृथक्त्व । यह एकपृथक्त्व से लेकर परार्द्धपृथक्त्व पर्य्यन्त होता है । सारकथा यह कि संख्या के और इसके प्रभेद समान ही होते हैं । यह भी सभी द्रव्यों में रहता है ।

संयोगस्य लक्षणम् —

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥**

सीता

संयोगस्य किं लक्षणं कुत्र च तिष्ठति सः इति जिज्ञासायामाह संयुक्तेत्यादि । "घटपटौसंयुक्तौ" इत्यादिः व्यवहारः संयुक्तव्यवहारः तद्धेतुत्वेसति गुणत्वं संयोगस्य लक्षणम् । अत्रापि संयुक्तपदानुपादाने घटादौ अतिव्याप्तिः "घट" इत्यादेरपि व्यवहारत्वात् । अयमपि सर्वेषु द्रव्येषु तिष्ठति । अयमव्याप्यवृत्तिर्भवति । देशभेदेन एकस्मिन्नेव तत्तदभावसत्त्वात् ।

पद्मा ।

"ये दोनो संयुक्त है" "इससे यह संयुक्त है" इत्यादि व्यवहार जिस गुण से होता है वह है संयोग । वह सभी द्रव्यों में रहता है । यह आश्रय को व्याप्त नहीं कर पाता । अतः अव्याप्यवृत्ती होता है । अर्थात् एकअधिकरण में भी प्रदेश-भेद से संयोग और उसका अभाव ये दोनों ही रहते हैं ।

विभागस्य लक्षणम्

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ।**

(न्या०) विभागं लक्षयति-संयोगेति । संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्ति स्तद्वारणाय गुणत्वमिति विशेष्योपादानम् ॥

सीता

विभागस्य किं लक्षणं कुत्रचासौ तिष्ठति इति जिज्ञासायामाह मूले—संयोगनाशकेति। न्यायबोधिन्यां संयोगनाशकत्वविशिष्टगुणत्वमित्यस्य संयोगनाशकत्वसमानाधिकरणगुणत्वमित्यर्थः । क्रियाया अपि संयोगनाशकत्वेन तत्रातिव्याप्तिः तद्वारणाय गुणपदं इत्याह विशेषण मात्रेति।

पद्मा।

जिस गुण से संयोग का नाश होता है वह है विभाग, क्रिया से विभाग होनेपर पूर्वसंयोग का नाश होता है अतः विभाग संयोग का नाशक होता है। विभाग भी सभी द्रव्यों में रहता है।

परत्वाऽपरत्वयोर्लक्षणं भेदश्चेति –

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी। ते च द्विविधे। दिक्कृते कालकृते चेति। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम् ॥**

सीता

परत्वापरत्वयोः किं लक्षणं केच भेदा इतिजिज्ञासायामाह मूले—परापरेत्यादि। तथाच "अयं परः" इत्यादि व्यवहारासाधारणकारणत्वंम् परत्वस्य, "अयं अपरः" इत्यादिव्यवहारासाधारणकारणत्वम् अपरत्वस्य लक्षणमितिभावः। प्रभेदमाह—तेचद्विविधे इत्यादि तथाच परत्वं द्विविधं कालिकं दैशिकंच। अर्थात् ज्येष्ठत्वं दूरत्वंच। एवमपरत्वमपि द्विविधं कालिकं दैशिकंच। अर्थात् कनिष्ठत्वं निक-

ष्टत्वञ्च इतिभावः। ज्येष्ठत्वं पूर्वोत्पन्नत्वं कनिष्ठत्वंच पश्चादुत्पन्नत्वं। एतदुभयं जन्यद्रव्ये एव। दूरत्वनिकटत्वे तु अव्यापकयोः नित्यानित्यद्रव्ययोस्तिष्ठति।

पद्मा।

"यह इससे ज्येष्ठ है" एवं "यह इससे दूर है" इत्यादि व्यवहार जिस गुण से उत्पन्न होता है वह है परत्व। और "यह कनिष्ठ है" "यह निकट है" इत्यादि व्यवहार जिस गुण से होता है वह है अपरत्व। कालिक परत्वापरत्व जन्यद्रव्यों में और दैशिकपरत्वापरत्व अव्यापकद्रव्यों में रहते हैं।

गुरुत्वस्य किं लक्षणमिति प्रश्ने उत्तरम्—

**आद्यपतनासमवायिकारणं गुरुत्वं पृथिवीजलवृत्ति॥**

(न्या०) गुरुत्वं लक्षयति—आद्येति। द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाऽद्येति। उत्तरत्र स्यन्दने आद्यत्वविशेषणमपि पूर्ववदेव योजनीयम्॥

सीता

गुरुत्वस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—आद्यपतनेति। प्रथमपतनं प्रत्यसमवायिकारणत्वम् गुरूत्वस्य लक्षणमित्यर्थः। पूर्वार्थकं आद्यपदं कथमुक्तं मूले इतिजिज्ञासायामुच्यते द्वितीयपतनेत्यादि आद्यपदानुक्तौ द्वितीयादिपतनं प्रति वेगस्यासमवायिकारणतया वेगे गुरुत्वलक्षणातिव्याप्तिः इतिभावः। परवर्त्तिनि द्रवत्वलक्षणेऽपि स्यन्दने आद्यत्वविशेषणम् देयमित्याह उत्तरत्रेत्यादि।

पद्मा।

जो गुण प्रथम पतन के प्रति असमवायिकारण होता है वह है गुरुत्व जिसे भारीपन कहा जाता है। पृथिवी और जल इन दोनों में यह रहता है। लक्षण में आद्य प्रथम आदि नही कहनेपर वेग में अतिव्याप्ति होगी।

द्रवत्वस्य लक्षणं भेदस्तत्स्थानञ्च—

**आद्यस्यन्दनासमवायिकारणं द्रवत्वम्। पृथिव्य प्तेजोवृत्ति। तद्द्विविधम्। सांसिद्धिकं नैमित्तिकं च**

**सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ॥**

सीता

द्रवत्वस्य किं लक्षणं के च भेदाः इति जिज्ञासायामाह मूले—आद्यस्यन्दनेति। स्यन्दनं प्रस्रवणं। तथाच प्रथमप्रस्रवणासमवायिकारणत्वं द्रवत्वस्य लक्षणमित्यर्थः। सांसिद्धिकं सार्वदिकं। नैमित्तिकं कदाचित्कम्।

पद्मा।

जिस गुण से किसी तरल द्रव्य का फैलाव हो उसका नाम है द्रवत्व। तरल तेल घृत आदि कहीं गिरने पर फैलता है यह प्रत्यक्षसिद्ध है। उस फैलने का कारण द्रवत्व ही है। जल में यह द्रवत्व सहज होता है और घी सुवर्ण आदि में अग्नि आदि तेज के संयोग से होता है। पसीझना, टपकना ये सभी द्रवत्व से ही होते हैं।

स्नेहस्य किं लक्षणं? तच्च कुत्र तिष्ठतीति—

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः॥**

(न्या०) स्नेहं लक्षयति—चूर्णादीति। चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्। पिण्डीभावो नाम चूर्णादेर्धारणाकर्षण हेतुभूतो विलक्षणः संयोगः। तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य। तथासति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः। अतः स्नेह एवासाधारणं कारणम्। विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम्। वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्। जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः॥

सीता

स्नेहस्य किं लक्षणमिति जिज्ञासायामाह मूले-चूर्णादीति। पिण्डीभावः धारणाकर्षणजनको विलक्षणः संयोगः। तथाच धारणाकर्षणजनकसंयोगजनकत्वेसति गुणत्वं स्नेहस्य लक्षणम्। द्रवत्व-

स्यैव कुतो नोक्तसंयोगकारणत्वमित्यत आह न्यायबोधिन्याम् तादृशेत्यादि। द्रुतसुवर्णकाचादिभिः संयोगे न भवति पिण्डीभावः। द्रवत्वस्य तत्कारणत्वेतु स्यादितिभावः। वस्तुतः "स्निग्धमिदं" इति व्यवहारहेतुगुणत्वमेव स्नेहस्य लक्षणम्। तथाच द्रवत्वस्य पिण्डीभावहेतुत्वाभ्युपगमेऽपि नक्षतिरित्याह—वस्तुतस्तुद्रुतेत्यादि। द्रुतपदं करकाव्यावृत्त्यर्थम्।

पद्मा।

जिस गुण से आटा धूल आदि में पिण्डीभाव उत्पन्न हो उसका नाम है स्नेह। यह केवल जल में रहता है। जिस संयोग के होनेपर एक अंश का धारण करनेपर समस्त पिण्ड धारित हो उसका नाम है पिण्डीभाव। जो लोग "तरलजलसंयोग" को पिण्डीभाव का कारण मानते हैं उनके मत से 'यह स्निग्ध है" इस व्यवहार के प्रति असाधारण कारण होनेवाले गुण को स्नेह समझना चाहिये।

शब्दस्य किं लक्षणम्? के च तद्भेदाः—

**श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स द्विविधः। ध्वन्यात्मको वर्णात्मकश्च। तत्र ध्वन्यात्मको भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः॥**

(न्या०) शब्दं लक्षयति-श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय-श्रोत्रेति। स त्रिविधः संयोगजो विभागजः शब्दजश्चेति। यथा भेरीदण्डसंयोगजो झांकारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः। शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते। तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम्॥

सीता

शब्दस्य किं लक्षणं कतिविधश्च सः इति जिज्ञासायामाह मूले—श्रोत्रेति। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वेसति गुणत्वं शब्दस्य

लक्षणम् । गुणत्वानुक्तौ शब्दत्वेऽतिव्याप्तिः । तन्मात्रोक्तौच रूपादौ अतिव्याप्तिः । संयोगेन जायते इति संयोगजः । एवं विभागजादावपि । प्रत्येकमुदाहरति यथाभेरीदण्डेत्यादि । अन्यत्रोक्तस्य शब्दस्य अन्यत्र श्रवणं न स्यात् अतः शब्दजः शब्दः स्वीकर्तव्यः । तथाच शब्दधारान्तःपातिकर्णोत्पन्नशब्दश्रवणं स्यात् इत्याह शब्दोत्पत्तीति ।

पद्मा ।

जिस गुणका प्रत्यक्ष कानसे होता है वह है शब्द । वह आकाश मात्रमें रहता है । वह दो प्रकार है ध्वनि और वर्ण । वाद्यों के शब्द ध्वनि रूप और अ आ क ख आदि हैं वर्ण ।

बुद्धेः किं लक्षणम् ? कतिधा च सा—

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विधा । स्मृतिरनुभवश्च ॥**

( न्या० ) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । व्यवहारः शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ।

सीता

बुद्धेः किं लक्षणं कतिविधा च सा इतिजिज्ञासायामाह मूले—सर्वव्यवहारेति । न्यायबोधिन्यां शब्दप्रयोग इत्यस्य वाक्यप्रयोग इत्यर्थः । तथात्र निखिलवाक्यप्रयोगजनकत्वे सति गुणत्वम् ज्ञानस्य लक्षणम् । गुणत्वानुक्तौ कालेश्वरयोरतिव्याप्तिः । तन्मात्रोक्तौ च रूपादावतिव्याप्तिः ।

पद्मा ।

जो सभी व्यवहारों के प्रति कारण हो एतादृश गुण का ही नाम है ज्ञान । प्रत्येक प्राणी जो भी कुछ करता है कुछ न कुछ समझ करके ही करता है । न्यायबोधिनी में तो व्यवहार शब्द का अर्थ शब्द प्रयोग किया है, किन्तु चेष्टामात्र भी इसका अर्थ किया जा सकता है ।

स्मृतेः किं लक्षणम् ?

## संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥

( न्या० ) स्मृतिं लक्षयति—संस्कारेति । संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वारणाय विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् । ध्वंसम्प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् ॥

सीता

स्मृतिरूपस्य ज्ञानप्रभेदस्य किं लक्षणं इतिजिज्ञासायामाह मूले—संस्कारेति । न्यायबोधिन्यां परिष्करोति वहिरिन्द्रियेति । वहिरिन्द्रियेणाजन्यं सत् संस्कारजन्यं यत् ज्ञानं तत्त्वं स्मृतिलक्षणमिति सरलार्थः । केवलं संस्कारजन्यत्वोक्तौ "सोऽयं देवदत्तः" इत्यादिप्रत्यभिज्ञायामतिव्याप्तिः । तदनुक्तौ अनुमितिशाब्दादावतिव्याप्तिः । ज्ञानत्वानुक्तौ संस्कारध्वंसे अतिव्याप्ति, अतः दलत्रयम् इतिसरलार्थः ।

पद्मा ।

जो ज्ञान आँख आदि वाह्य इन्द्रियों से उत्पन्न नही होता है और भावना नामक संस्कार से उत्पन्न होता है वही है "स्मृति । "यह वही देवदत्त है" यह प्रत्यभिज्ञा नामक ज्ञान आँख से उत्पन्न ही होता है । अनुमिति आदि ज्ञान भावना से उत्पन्न नही होते । संस्कार का नाश ज्ञान नहीं है अतः "वहिरिन्द्रियाजन्यभावनाजन्यज्ञानत्व" स्मृति का लक्षण है ।

अनुभवस्य लक्षणं तद्भेदश्च—

## तद्भिन्नं ज्ञानमनुभवः । स द्विविधो यथार्थोऽयथार्थश्च ॥

( न्या० ) अनुभवं लक्षयति—तद्भिन्नमिति । तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम् । स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम् । तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः; विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुभयोरुपादानम् । अनुभवं विभजते—स द्विविध इति ॥

सीता

अनुभवस्य ज्ञानप्रभेदस्य किं लक्षणं केच भेदाः इतिजिज्ञासायामाह मूले-तद्भिन्नमिति । न्यायबोधिन्यां तत्परिष्करोति-तथाच स्मृतीति । स्मृतिभिन्नत्वेन विशेषितं यत् ज्ञानं तत्त्वं स्मृतेर्लक्षणमिति तदर्थः । ज्ञानत्वमात्रोक्तौ स्मृतेरनुभवत्वापत्तिः । तदनुक्तौ घटादौ अतिव्याप्तिः अतः उभयदलम् इत्यभिप्रायः ।

पद्मा

स्मरणभिन्न सारे ज्ञान अनुभव हैं । वे दो प्रकार हैं यथार्थानुभव और अयथार्थानुभव । स्मरणभिन्न को अनुभव कहनेपर घट आदि विषयों को अनुभवत्वापत्ति होगी । ज्ञान को अनुभव कहनेपर स्मरण भी अनुभव कहलाने लगेगा अतः लक्षण में स्मरणभिन्नत्व और ज्ञानत्व दोनोंका प्रवेश है ।

यथार्थानुभवस्य ( प्रमाया वा ) लक्षणम्—

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः । सैव प्रमेत्युच्यते ॥**

( न्या० ) यथार्थानुभवं लक्षयति—तद्वतीति । तद्वतीत्यत्र सप्तम्यर्थो विशेष्यत्वम् । तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः । तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम् । उदाहरणम्— रजते 'इदं रजतम्' इति ज्ञानम् । अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति तु निष्कर्षः । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रजतरङ्गे इत्याकारकसमूहालम्बनभ्रमे अतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात् । उक्तनिष्कर्षे तु नातिव्याप्तिः, रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावात् । किंतु समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वात् । एवं रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाचेति । नानामुख्यविशेष्यताशालिज्ञानं समूहालम्बनम् ॥

सीता

अनुभवज्ञानप्रभेदस्य यथार्थानुभवस्य किं लक्षणम् इति जिज्ञासायामाह मूले—तद्वतितदिति। न्यायबोधिन्यां निष्कृष्टलक्षणमाह तद्वन्निष्ठेत्यादि। तद्वति=विशेषणवति निष्ठा=वृत्तिता यस्याः विशेष्यतायाः सा तद्वन्निष्ठविशेष्यता, तया निरूपिता या तन्निष्ठा=विशेषणनिष्ठा प्रकारता तच्छालित्वम्=तन्निरूपकत्वम् इति तदर्थः। रजते यदि "इदं रजतम्" इति ज्ञानं क्रियते तदा तत्र रजतत्वं विशेषणं रजतं विशेष्यं। रजतत्व विशेषणता रूपा प्रकारता रजतेच विशेष्यता। विशेष्यताप्रकारतयोश्च परस्परं निरूप्यनिरूपकभावः। विशेष्यस्यच रजतस्य तत्त्वतः रजतत्वरूपप्रकारवत्त्वंम् अतः रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारतानिरूपकत्वं उक्ते ज्ञाने अस्तीति लक्षणसमन्वय इतिभावः। तद्वद्विशेष्यकत्वेसति तत्प्रकारकज्ञानत्वं यथार्थानुभवत्वम् एतावदुक्तौ दोषमाह—अन्यथा-यथाश्रुतइत्यादि। अयंभावः यत्र एकं रजतखण्डं अपरं रङ्गखण्डं च विद्यते तत्र विपरीततया यदि इमेरङ्गरजते" इति ज्ञानं विधीयते, भ्रमस्य तस्य रङ्गरजतोभयविशेष्यकत्वेन रङ्गत्वरजतत्वोभयप्रकारकत्वेनच रङ्गत्ववद्विशेष्यकत्वरजत्वप्रकारकत्वयोः रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोश्च सत्त्वेन प्रमात्वापत्तिः। निरूप्यनिरूपकभावापन्नप्रकारताविशेष्यताघटितलक्षणाभिधाने तु न दोषः। रङ्गनिष्ठविशेष्यतानिरुपितत्वस्य रङ्गत्वनिष्ठप्रकारतायां, रजतनिष्ठविशेष्यतानिरूपितत्त्वस्य च रजतत्वनिष्ठप्रकारतायां तत्राभावात् इति।

पद्मा।

जहाँ जो वस्तु हो वहाँ उसे समझना यथार्थज्ञान है। जैसे चाँदी को "यह चाँदी है" यह ज्ञान करना। इसी को प्रमा भी कहते हैं। इसी बात को न्यायबोधिनीकार पहले यह कहा कि तद्वद्विशेष्यक होता हुआ जो तत्प्रकारक हो ऐसे अनुभव का नाम है यथार्थानुभव। तत् पद से विशेषणीभूत वस्तु को समझना। किन्तु ऐसा कहने पर जहाँ एक रजतखण्ड और दूसरा राङ का खण्ड है वहाँ यदि कोई विपरीतभाव से "ये राङ और रजत हैं" ऐसा ज्ञान करे तो उस भ्रमज्ञान को यथार्थानुभवत्व की आपत्ति होगी। क्योंकि विपरीतभाव से समझने पर भी रजत और रङ्ग दोनों ही उसमें विशेष्य हैं और उनमें रहने वाले रङ्गत्व और रजत्व ही विशेषण हैं। अतः "तद्वन्निष्ठविशेष्यतानिरूपित-

तन्निष्ठप्रकारतानिरूपकज्ञानत्व" यथार्थानुभव का लक्षण समझना चाहिये। ऐसा कहने पर दोष इसलिये नही होता कि विपरीतभाव से राङे को रजत और रजत को राङा समझने के कारण विशेष्यता तद्वन्निष्ठा नही होती। क्योंकि तत्पद से रजतत्व आता है और विशेष्यता रङ्ग में होती। "तद्वन्निष्ठ" और तन्निष्ठ यहाँ दोनों जगह तत्पद से एकही विशेषणीभूत वस्तु को पकड़ना चाहिये।

अयथार्थानुभवस्य लक्षणम्—

## तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः॥

( न्या० ) अयथार्थानुभवं लक्षयति— तदभाववतीति। अत्रापि पूर्ववत्तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम्। अन्यथा रङ्गरजतयोरिमे रङ्गरजते इत्याकारसमूहालम्बनप्रमायामतिव्याप्तिः। एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात्। निष्कर्षे तु रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गविशेष्यतानिरूपितत्वाभावात् एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः। उदाहरणम्— यथा शुक्तो 'इदं रजतम्' इति॥

सीता

अयथार्थानुभवस्य किं लक्षणम् इतिजिज्ञासयामाह मूले— तदभाववतीति। अत्रापि प्रथमं तदभाववद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं लक्षणम्। ततः रङ्गरजतयोः "इमे रङ्गरजते" इतियथार्थानुभवे अतिव्याप्तिः। अतः पूर्ववदेव अत्रापि "तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वम् अयथार्थानुभवस्य लक्षणं बोध्यम्। तथाच तस्यानुभवस्य तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वेन तदभाववन्निष्ठेत्यादिलक्षणाभावेन अतिव्याप्तिवारणम् इति न्यायबोधिनीसारांशः।

पद्मा।

जहाँ जो वस्तु नही हो वहाँ उसे समझना अयथार्थज्ञान है। जैसे सीप को "यह चाँदी है" ऐसा समझना। इसेही अप्रमाभी कहते हैं। न्यायबो-

धिनीकार कहते हैं कि यहाँ भी तदभाववद्विशेष्यकतत्प्रकारकज्ञानत्व लक्षण करने पर रङ्ग और रजत में होने वाले "ये राङ्ग और चाँदी हैं" इस ज्ञान में अतिव्याप्ति होती है अतः "तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकानुभवत्व" लक्षण समझना चाहिये।

कतिकेच यथार्थानुभवस्य भेदाः—

**यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ॥**

(न्या०) यथार्थानुभवं विभजते—चतुर्विध इति ॥

पद्मा।

यथार्थ अनुभव चार प्रकार हैं प्रत्यक्ष अनुमिति उपमिति और शाब्दबोध। उन चारों के करण अर्थात् प्रमाण भी चार प्रकार हैं जैसे प्रत्यक्ष अनुमान उपमान और शब्द।

कतिकेचानुभवानां करणानि—

**तत्करणमपि चतुर्विधम्। प्रत्यक्षानुमानोपमानशब्दभेदात् ॥**

(न्या०) तत्करणमिति। फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः। प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणं। एकैकप्रमाणलक्षणं तु वक्ष्यते प्रत्यक्षज्ञानेत्यादिना ॥

पद्मा।

न्यायबोधिनीकार कहते हैं कि "प्रमाकारणत्व" प्रत्यक्ष अनुमान आदि चारों का असाधारण धर्म्म है अतः वही प्रमाणत्व है क्योंकि वह प्रत्यक्ष आदि चारों प्रमाणों में समान भाव से रहता है।

करणस्य किं लक्षणम्?

**असाधारणं कारणं करणम् ॥**

(न्या०) करणलक्षणमाह—असाधारणमिति। व्यापारवदसाधारणं कारणं करणमित्यर्थः। असाधारणकारणत्वं च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्य्यतानिरूपितकारणताशालित्वम्। यथा दण्डादेर्घटा-

दिकं प्रत्यसाधारणकारणत्वम्। कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः तदवच्छिन्नकार्यता घटे। तन्निरूपितकारणता दण्डे। अतो घटं प्रति दण्डः असाधारणं कारणम्। भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम्। साधारणकारणत्वं च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। ईश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् ॥

सीता

करणस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—असाधारणेति। अत्रायं न्यायबोधिनीसारांशः। व्यापारान्तरितत्त्वेसति कार्य्यत्वातिरिक्तधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणताशालित्वं करणस्य लक्षणम्। कार्य्यत्वातिरिक्तो यो धर्म्मः तदवच्छिन्ना या कार्य्यता तन्निरुपिता या कारणता तदाश्रयत्वमर्थो बोध्यः। दण्डस्य घटं प्रति भ्रमिव्यापारान्तरितत्त्वमप्यस्ति कार्य्यत्वातिरिक्तो यो घटत्वधर्मः तदवच्छिन्नकार्य्यतानिरूपितकारणताप्यस्तीति घटकरणत्वम् एवमन्यत्रापि बोध्यम् इति। न्यायबोधिन्युक्तासाधारणत्वशरीरात् अतिरिक्तपदवहिष्कारे तदेव साधारणकारणत्वं सम्पद्यते। तत्रापि कार्य्यत्वेनावच्छिन्ना या कार्य्यता तन्निरूपिता या कारणता तदाश्रयत्वमर्थः। ईश्वरादृष्टादौ साधारणकारणे ऽतिव्याप्तिवारणाय करणत्वशरीरे असाधारणत्वनिवेशः।

पद्मा।

तत्तत् कार्य्य के प्रति जो असाधारण कारण होता है वही होता है तत्तत् कार्य्य के प्रति करण। असाधारण कारण वह कहलाता है जो सभी कार्य्यों के प्रति कारण नही होता है किन्तु घट पट आदि तत्तत् कार्य्यों के प्रति कारण होताहै। न्यायबोधिनीकार कहते हैं कि करण को व्यापारवान् भी होना चाहिये। दण्ड घटके प्रति करण होताहै क्योंकि दण्डसे चक्रभ्रमण होनेपर घट उत्पन्न होताहै अतः दण्ड व्यापारवान्भी है और विशेषतः घटके प्रति कारण है सब कार्य्योंके प्रति नही। अतः घटके प्रति असाधारणकारणभी है।

कारणस्य किं लक्षणम् ?

## कार्यनियतपूर्ववृत्ति कारणम् ॥

( न्या० ) कारणं लक्षयति-कार्यनियतेति। कार्यं प्रति नियतत्वे

सति पूर्ववृत्तित्वम्। नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो नियतत्वे सतीति विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयम्। दण्डरूपादीनांत्वन्यथासिद्धत्वात् ॥

सीता

करणत्वघटकं कारणत्वं किं इतिजिज्ञासायामाह मूले कार्य्येति। कार्य्यस्य नियतत्वे पूर्ववृत्तित्वे चान्वयः। नियतत्वं अन्यूनानतिरिक्तवृत्तित्वम्। पूर्ववृत्तित्वञ्च अनन्यथासिद्धत्वेसति अव्यवहितप्राक्क्षणसम्बद्धत्वम्। तथाच तदन्यूनानतिरिक्तवृत्तित्वेसति तं प्रत्यनन्यथासिद्धत्वेसति तदव्यवहितप्राक्क्षणसम्बद्धत्वं तं प्रति कारणत्वम् इत्यननुगतमेव कारणत्वं निर्वचनीयम्। नियतत्त्वेन घटादिकं प्रति कथंचित् पूर्ववर्त्तिनोरासभादेः वारणम्। स्वस्य स्वं प्रति कारणत्ववारणाय पूर्ववृत्तित्वनिवेशः। दण्डरुपादेः घटादिकं प्रति कारणत्ववारणायानन्यथासिद्धत्वनिवेशः। यदिच रासभस्यापि अनन्यथासिद्धत्वदलेनवारणम् तदा तत्रैव भेदकूटनिवेशलाघवाय नियतत्वनिवेश इति बोध्यम्। अयमेवात्र न्यायबोधिनीसारार्थः।

पद्मा

जो जिस कार्य्यके प्रति नियतपूर्ववर्त्ती हो वह उसके प्रति कारण होता है। अर्थात् जिसके बिना जो उत्पन्न नही होता वह उसकेप्रति कारण होताहै। जैसे तन्तुके बिना पट उत्पन्न नहीं होता अतः तन्तु पटके प्रति कारण होताहै इसी प्रकार अन्यत्र भी समझना।

किं कार्य्यस्य लक्षणम् ?

## कार्यं प्रागभावप्रतियोगि ॥

( न्या० ) कार्यं लक्षयति--कार्यमिति। प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्। कार्योत्पत्तेः प्राक् 'इह घटो भविष्यति' इति प्रतीतिर्जायते। एतत्प्रतीतिविषयीभूतो योऽभावः तत्प्रतियोगि घटादिकं कार्यम्।

प्रश्न

जो प्रागभावका प्रतियोगी हो अर्थात् जिसका कभी प्रागभाव हो वह कहलाता है कार्य । आत्मा परमाणु आदि नित्यों का कभी प्रागभाव नही होता अतः वे कार्य नही होते । घट पट आदि अपनी उत्पत्ति से पहले नही रहते उनका प्रागभाव होता है अतः वे होते हैं कार्य्य ।

कतिविधं कारणम् ?

**कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात् ॥**

( न्या० ) कारणं विभजते—कारणमिति । समवायिकारणमसमवायिकारणं निमित्तकारणं चेति ॥

प्रश्न

कार्य्य के प्रति कारण तीन प्रकार होते हैं समवायिकारण असमवायिकारण और निमित्तकारण । कोई कार्य्य ऐसा भी होता है जिसके प्रति कोई समवायिकारण और असमवायिकारण नही होते जैसे ध्वंस ।

समवायिकारणस्य किं लक्षणम् ?

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य । पटश्च स्वगतरूपादेः ॥**

( न्या० ) समवायिकारणं लक्षयति— यत्समवेतमिति । यस्मिन्समवेतं सत्समवायेन सम्बद्धं सत् कार्यमुत्पद्यते तत् तन्तवः समवायिकारणमित्यर्थः । उदाहरणम्—यथा तन्तव इति । तन्तुषु समवायेन सम्बद्धं सत्पटात्मकं कार्यमुत्पद्यते तत् = तन्तवः समवायिकारणमित्यर्थः । सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति । समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात, समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्न-कार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम् । द्रव्ये तु द्रव्यावयवाः समवायिकारणम् । अतो गुणा-

दावपि द्रव्यमेव समवायिकारणमित्याशयेनाह-पटश्च स्वगतरूपादेरिति। समवायिकारणमित्यनुषज्यते॥

सीता

समवायिकारणस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—यत्समवेतेति। तस्य सामान्यलक्षणमाह न्यायबोधिन्यां सामान्यलक्षणंतु-समबायेति। एकस्मिन्नधिकरणे वर्त्तमानयोरेव कार्य्यकारणभावः तत्र तस्मिन्नधिकरणे कार्यं येन सम्बन्धेन तिष्ठति स कार्य्यतावच्छेदकसम्बन्धः तत्सम्बन्धावच्छिन्ना कार्य्यता भवति। कारणंच येन सम्बन्धेन तिष्ठति स कारणतावच्छेदकसम्बन्धः तदवच्छिन्ना कारणता भवति। कार्य्यताकारणतयोश्च परस्परं निरूप्यनिरूपकभावः। यथा एकस्मिन् कपालात्मके अधिकरणे घटः समवायेन तिष्ठति कपालंच तादात्म्यसम्बन्धेनेति घटनिष्ठा कार्य्यता समवायसम्बन्धावछिन्ना कपालनिष्ठाकारणताच तादात्म्यसम्बन्धावच्छिन्ना भवति। एवं कारणमात्रवृत्तिर्धर्म्मः कारणतावच्छेदको भवति कारणता तदवच्छिन्ना। कार्य्यमात्रवृत्तिधर्मः कार्य्यतावच्छेदकः कार्य्यता च तदवच्छिन्नेति घटनिष्ठसमवायसम्बन्धावछिन्ना कार्य्यता भवति घटत्वावच्छिन्ना। कपालनिष्ठा तादात्म्यसम्बन्धावच्छिन्ना कारणता भवति कपालत्वावच्छिन्ना इति समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्य्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वावच्छिन्नकारणता विद्यते कपाले। सैव घटसमवायिकारणता तत्र। एवमेव सर्वत्र बोध्यम्

पद्मा।

जिस कारणमे जो कार्य्य समवाय सम्बन्धसे उत्पन्न होताहै वह उसके प्रति समवायिकारण होताहै। जैसे तन्तु पटके और कपाल घटके प्रति। समवायिकारण द्रव्य गुण और कर्म्म तीनो कार्य्योंके प्रति द्रव्यही होताहै अतः घटपटगत रूप रस आदि गुण एवं उत्क्षेपण आदि क्रियाओंके प्रति समवायि कारण घटपट आदि द्रव्य होतेहैं।

असमवायिकारणस्य किं लक्षणम्?

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत्**

**कारणमसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटरूपस्य॥**

(न्या०) असमवायिकारणं लक्षयति-कार्येणेति। कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत् असमवायिकारणमित्यन्वयः। कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तदसमवायिकारणमित्यन्वयः। अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः। जन्यद्रव्यमात्र अवयवसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शयति-यथा तन्तुसंयोगः पटस्येति। पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतं सत्समवायसम्बन्धेन वर्तमानं सत्पटात्मककार्यम्प्रति तन्तुसंयोगात्मकं कारणमसमवायिकारणमित्यर्थः। द्वितीयमसमवायिकारणं कारणेन सहेत्यादिना पूर्वोक्तं तदुदाहरति-तन्तुरूपमिति। कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह एकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतं सत् समवायसम्बन्धेन वर्तमानं सत् तन्तुरूपं पटगतरूपं प्रति कारणम् भवति, अतोऽसमवायिकारणं तन्तुरूपं पटगतरूपस्य। सामान्यलक्षणं तु समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति। द्रव्यसमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते। एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः। आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात्। अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसम्बन्धेनैव कारणत्वात्, तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते। अवयवगुणकपालतन्तुरूपादेः स्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालतन्तुसमवेतत्वसम्बन्धेन घटपटादौ सत्त्वात्।

### सीता

असमवायिकारणस्य किं लक्षणम् इतिजिज्ञासायामाह मूले-कार्येणेत्यादि। कार्य्येण सह एकस्मिन्नर्थे समवेतं सत्कारणम् असमवा-

यिकारणम्। एवं कारणेन सह एकस्मिन्नर्थे समवेतं कारणं असमवायि कारणम् इति तदर्थः। असमवायिकारणतामनुगमय्य न्यायबोधिन्यामाह—सामान्यलक्षणन्तु समवायेनेत्यादि। अयंभावः—क्वचित् असमवायिकारणस्य समवायसम्बन्धेन कार्य्याधिकरणे वर्त्तमानतया समवायसम्बन्धः असमवायिकारणतावच्छेदकसम्बन्धो भवति यथा घटादिकं प्रति कपालसंयोगादेः कारणत्वे। समवायेन घटाधिकरणे कपाले समवायसम्बधेन कपालद्वयसंयोगस्य विद्यमानत्वात्। यथावा आद्यपतनंप्रति गुरुत्वस्य कारणत्वस्थले। समवायेन पतनाश्रये द्रव्ये समवायेन गुरूत्वस्य सत्त्वात्। क्वचिच्च स्वसमवायिसमवेतत्त्वसम्बन्धावच्छिन्ना असमवायिकारणता भवति यथा घटादिरूपादिकं प्रति कपालादिरूपादेः असमवायिकारणत्वस्थले। तत्र असमवायिकारणस्य कपालरूपादेः घटादिरूपाद्यात्मक कार्य्याधिकरणे घटादौ स्वसमवायिसमवेतत्वसम्बन्धेन सत्त्वात्। कार्य्यतावच्छेदकसम्बन्धस्तु उभयत्र समवाय एव। समवाय सम्बन्धावच्छिन्ना या कार्य्यता तन्निरूपिता या समवायस्वसमवायिसमवेतत्वयोर्मध्ये यत्किञ्चिदेकसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वम् असमवायिकारणस्य लक्षणम् इति। स्वं कपालरूपम् तत्समवायि कपालं तत्समवेतो घटः इति स्वसमवायिसमवेतत्वसम्बन्धेन कपालरूपस्य घटे सत्त्वम्।

पद्मा।

प्रकृत कार्य्य के साथ अथवा उसके समवायिकारण के साथ एक अधिकरणमें रहने वाला कारण कहलाता है असमवायिकारण। तन्तुसंयोग पट के साथ तन्तु में बैठता है अतः पट के प्रति असमवायिकारण होता है। तन्तु का रूप, पट के प्रति समवायिकारण होने वाले पट के साथ तन्तु स्वरूप अधिकरण में बैठता है अतः पटरूप के प्रति असमवायिकारण होता है। सरल अर्थ यह है कि कार्य्य के समवायिकारण में समवाय सम्बन्ध से अथवा स्वसमवायिसमवेतत्वसम्बन्ध से रहनेवाला कारण असमवायिकारण होता है। कपाल में कपालद्वयसंयोग समवायसम्बन्ध से और घट में कपाल का रूप स्वसमवायिसमवेतत्वसम्बन्ध से रहता है।

निमित्तकारणस्य किं लक्षणम् ?

तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ॥

( न्या० ) निमित्तकारणं लक्षयति – तदुभयभिन्नमिति । समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणत्वमित्यर्थः ॥

पद्मा ।

समवायिकारण और असमवायिकारण से भिन्न होनेवाला कारण निमित्त कारण होताहै । जैसे तन्तु और तन्तुसंयोग से भिन्न होनेवाले तुरी वेमा आदि होतेहैं पटके प्रति निमित्तकारण । फलतः "समवाय्यसमवायिकारणभिन्नकारणत्व" निमित्तकारणका लक्षणहै ।

करणस्य निष्कृष्टमिदं लक्षणम् –

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥

( न्या० ) तदेतदिति । यदसाधारणमिति । व्यापारवत्वे सतीत्यपि पूरणीयम् । अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नम्प्रति कारणत्वादसाधारणत्वमस्त्येवेत्यतस्तत्र करणत्ववारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयम् । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् । भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वं कपालतन्तुजन्यत्वे सति कपालतन्तुजन्यघटपट जनकत्वात् । करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वस्य सत्त्वात्, तत्रातिव्याप्तिवारणायासाधारणेति विशेषणम् ॥

सीता

करणस्य किं पर्य्यवसितं लक्षणम् इतिजिज्ञासायामाह तदेतदिति । त्रिविधकारणं = समवायिकारणासमवायिकारणनिमित्तकारणानि । तेषां मध्ये इत्यर्थः । असाधारणत्वं पूर्वोक्तम् वेदितव्यम् ।

करणजन्यत्वे सति करणजन्यजनकत्वं व्यापारत्वं निरूच्य तादृशव्यापारवत्त्वमपि निवेश्यम्। तथाच व्यापारवत्वे सति कार्य्यत्वातिरिक्तत-द्धर्म्मावच्छिन्नकार्य्यतानिरूपितकारणतावत्वम् करणस्य लक्षणमिति फलितम्। लक्षणसमन्वयप्रकारः पूर्वोक्तोऽवसेयः। व्यापारलक्षणसमन्वयमाह—भवति हीति। असाधारणत्वनिवेशप्रयोजनमाह—करणलक्षणेत्यादि। तन्निवेशे साधारणकारणेषु ईश्वरादिषु नातिव्याप्तिरिति भावः।

### पद्मा।

समवायिकारण असमवायिकारण और निमित्तकारण इन तीनों के भीतर जो व्यापारसे युक्त होताहुआ असाधारण कारण होता है अर्थात् प्रकृतकार्य्यमात्रके प्रति कारण होता है वह होता है करण।

### प्रत्यक्षप्रमाणस्य किं लक्षणम्?

## तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्।

(न्या०) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति। प्रमाभूतेषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवद-साधारणं कारणमिन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम्। आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायरूपत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या। मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या॥

### सीता

तत्करणमपीत्यादिना प्रत्यक्षादिचतुष्टयस्य प्रमाणत्वे प्रतिपादिते प्रत्यक्षप्रमाणस्य किं लक्षणम् इति जिज्ञासायामाह मूले—तत्र-प्रत्यक्षेति। प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणमिति तदर्थः। लक्षणसमन्वयप्रकारमुपदिशति—प्रमाभूतप्रत्यक्षेत्यादि। रूपरूपत्वादिप्रत्यक्षस्थले संयुक्तसमवायतत्समवेतसमवायादीनां सन्निकर्षतया तेषां नित्यत्वेन इन्द्रियजन्यत्वाभावात् कथं तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारता? तदभावे च कं व्यापारतयादाय चक्षुरादेः

करणता ? इति जिज्ञासायामाह—आद्यसन्निकर्षेत्यादि । तादृशस्थल चक्षुर्मनस्संयोगादेरेव व्यापारता तथाविधव्यापारमादायैव च चक्षुरादीनां करणता इतिभावः।

पद्मा

प्रत्यक्षप्रमाके प्रति व्यापारयुक्त होकर असाधारणभावसे कारण होनेवाली वस्तु है प्रत्यक्षप्रमाण। अर्थात् आँख प्रभृति इन्द्रियाँ हैं प्रत्यक्षप्रमाण। क्योंकि संयोग आदि सन्निकर्ष स्वरूप व्यापारके द्वारा वे चाक्षुष आदि प्रमाके प्रति असाधारण कारण होती हैं।

प्रत्यक्षज्ञानस्य ( प्रत्यक्षप्रमाया वा ) किं लक्षणम् ?

**[ ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ] इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद्द्विविधम्। निर्विकल्पकं सविकल्पकं चेति ॥**

( न्या० ) प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—ज्ञानाकरणकमिति । ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च करणं येषां ते ज्ञानाकरणकाः अनुमित्युपमितिशाब्दाः। ज्ञानकरणकं न भवतीति ज्ञानाकरणकम् तत्त्वम् प्रत्यक्षलक्षणम्। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्। ईश्वरप्रत्यक्षस्याजन्यत्वात्, जन्यप्रत्यक्षे च इन्द्रियाणामेव करणत्वं न तु ज्ञानस्येति तयोरुभयोः संग्रहः। इन्द्रियार्थसंनिकर्षेति । जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम्। प्रत्यक्षं विभजते—निर्विकल्पकमिति ॥

सीता

प्रत्यक्षप्रमाया एव किं लक्षणम् इति जिज्ञासायामाह मूलेऽ—इन्द्रियार्थसन्निकर्षेति। इन्द्रियस्य यः अर्थेन सह सन्निकर्षः सम्बन्धविशेषः तज्जन्यत्वे सति ज्ञानत्वम् प्रत्यक्षप्रमायाः लक्षणमित्यर्थः। "अपाणिपादोजवनो गृहीता" इत्यादिश्रुत्या परमेश्वरस्येन्द्रियाभावेन तत्कर्तृकप्रत्यक्षे इन्द्रियार्थसन्निकर्षजन्यज्ञानत्वरूपस्य प्रत्यक्षलक्षणस्याव्याप्तिः अतः ज्ञानाकरणकज्ञानत्वं प्रत्यक्षस्य लक्षणमिति वक्तव्यम्। अनुमित्युपमितिशाब्दबोधानां व्याप्तिज्ञानसादृश्यज्ञानपदज्ञानकरणकत्वात

ज्ञानकरणकत्वम्। जीवकर्तृकस्य प्रत्यक्षस्य इन्द्रियकरणकत्वात् ज्ञानाकरणकत्वम्। ईश्वरकर्तृकस्य च प्रत्यक्षस्य नित्यत्वेनाकरणकत्वात् ज्ञानाकरणकत्वम् इति नातिव्याप्त्यव्याप्त्यवकाशः इति सारार्थः।

पद्मा

अपने विषय के साथ इन्द्रियका सम्बन्ध होने पर उससे जो ज्ञान उत्पन्न होताहै वह है प्रत्यक्ष। जैसे घटके साथ चक्षु जुटने पर होनेवाला 'यह घट है" यह ज्ञान प्रत्यक्ष है, यह चाक्षुष प्रत्यक्ष है। इसीप्रकार अन्य इन्द्रियों से भी प्रत्यक्ष उत्पन्न होते हैं—अतः प्रत्यक्ष घ्राणज रासन चक्षुष त्वाच् श्रावण और मानस छः प्रकार होते हैं। यदि ईश्वरकर्तृक प्रत्यक्षभी निर्वचनीय हो तो इसप्रकार समझना चाहिये कि ज्ञान जिसज्ञानका करण न हो वह है प्रत्यक्ष। अनुमितिकेप्रति व्याप्तिज्ञान उपमितिकेप्रति सादृश्यज्ञान और शाब्दबोधकेप्रति पदज्ञान करण होते हैं अतः वे हैं ज्ञानकरणक। भगवानका प्रत्यक्ष अकरणक है सुतरां ज्ञानाकरणक है। जन्यप्रत्यक्षकेप्रति आँख आदि इन्द्रियां करण होती हैं अतः वह भी "ज्ञानाकरणक" है। प्रत्यक्ष दो प्रकारहैं सविकल्पक और निर्विकल्पक।

निर्विकल्पकस्य किं लक्षणम्?

## तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्॥

(न्या०) तल्लक्षयति—तत्र निष्प्रकारकमिति। प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी विषयता स्वीक्रियते। न तु त्रिविधविषयतामध्ये कापि तत्रास्ति अतो विशेष्यताशून्यज्ञानत्वं संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं सम्भवति॥

सीता

निर्विकल्पकस्य प्रत्यक्षस्य किं लक्षणम् इति जिज्ञासायामाह मूले—तत्र निष्प्रकारकेति। तत्र = द्वयोर्मध्ये। प्रकारताशून्यज्ञानत्वम् निर्विकल्पकस्य लक्षणम् इत्यर्थः। विशिष्टज्ञानं विशेषणज्ञानं विना न सम्भवतीति सविकल्पकज्ञानात् पूर्वं निर्विकल्पकं ज्ञानं स्वीक्रियते। निर्विकल्पकं बोधयति—निर्विकल्पके चतुर्थीति। चतुर्थी = प्रकारताविशेष्यतासंसर्गताभिन्ना काचन।

पद्मा

जिसज्ञानमें विशेषण विशेष्य और सम्बन्ध ये तीन, विषय नही होते हैं वह होता है निर्विकल्पक। वह ज्ञान इसलिए माना जाताहै कि विशिष्टज्ञान विना विशेषण ज्ञानके नही होता। विशिष्टज्ञान और सविकल्पकज्ञान एकही वस्तु है। यदि विशेषणज्ञान भी सविकल्पक होगा तो इसकेलिए भी विशेषणज्ञान अपक्षित होगा तब अनवस्था होगी। अतः विशेषणज्ञान निर्विकल्पक माना जाताहै।

सविकल्पकस्य किं लक्षणम् ?

**सप्रकारकं ज्ञानं सविकल्पकम्। यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति ॥**

(न्या०) सविकल्पकं लक्षयति—सप्रकारकमिति। विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वमित्यपि लक्षणं सम्भवति। उदाहरणम्—यथेति। इदन्त्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः।

सीता

सविकल्पकस्य प्रत्यक्षस्य किं लक्षणम् इतिजिज्ञासायामाह मूले-सप्रकारकेति। लक्षणं बोधयति न्यायबोधिन्यां—विषताया इत्यादि। अयं भावः "अयं ब्राह्मणः" इतिज्ञानस्थले पतत्त्वेनाभिप्रेतो ब्राह्मणो विशेष्यः ब्राह्मणत्वं विशेषणम् अर्थात् प्रकारः द्वयोः समवायः सम्बन्धः इति ब्राह्मणे विशेष्यता ब्राह्मणत्वे प्रकारता समवाये संसर्गता तिष्ठति त्रयाणामेषां ज्ञाननिरूपितत्वम् ज्ञानस्य च "अयं ब्राह्मण" इत्यस्य तन्निरूपकत्वम् इति प्रकारतानिरूपकत्वम् वा विशेष्यतानिरूपकत्वं वा संसर्गतानिरूपकत्वं वा भवितुमर्हति सविकल्पकस्य लक्षणम्। तत् निरूक्तम् ज्ञाने "घटघटत्वे" इत्यादौ समन्वेति चेति स्पष्टयति—इदन्त्वेत्यादि। इदन्त्वावच्छिन्ना या एतन्निष्ठा विशेष्यता तन्निरूपिता या डित्थत्वनिष्ठा प्रकारता तच्छालित्विर्थः। एवं परत्राऽपि।

पद्मा

सविकल्पक ज्ञानकाही दूसरा नाम है विशिष्टज्ञान । उसमे विशेष्य विशेषण और इनदोनोंके सम्बन्ध ये तीन होतेहैं विषय । विशेष्यमे रहतीहै विशेष्यता। और विशेषण मे रहतीहै प्रकारता । एवं सम्बन्धमे रहतीहै संसर्गता । इन तीनोंका निरूपक होताहै वह विशिष्टज्ञान और ज्ञान से निरूपित होतीहैं वे तीन विषयतायें । अतः प्रकारतानिरूपक ज्ञान को सविकल्पक समझना चाहिये विशेष्यतानिरूपक संसर्गतानिरूपक आदि भी कहा जासकताहै। "यह ब्राह्मणहै" इस ज्ञान स्थलमे ब्राह्मण होताहै विशेष्य ब्राह्मणत्व होताहै प्रकार और समवाय होता है सम्बन्ध ।

सन्निकर्षः कतिविधः ? इति प्रश्ने उत्तरम्—

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः । संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति ॥**

( न्या० ) चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—संयोग इत्यादिना । द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि । अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति त्वक्संयोगस्य हेतुता । एवं द्रव्यसमवेतत्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति त्वक्संयुक्तसमवायस्य हेतुता । द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्ममानसप्रत्यक्षे मनःसंयोगस्य हेतुता । आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता । रसनघ्राणयोस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या । श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण च समं

शब्दस्य समवायः संनिकर्षः। शब्दवृत्तिशब्दत्वकत्वखत्वादिजाति-विषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता। अभावप्रत्यक्षे-विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः। पञ्चविधसंनिकर्षोपरि विशेषणता योजनीया। तथाहि—द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता। द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता। संयोगस्थाने संयुक्तपदं घटयित्वा समवायस्थाने समवेतपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम्। तथा घटद्रव्यसमवेतं घटत्वं पृथ्वीत्वादिकं रूपादिकं च। तत्र नीलादौ पीतत्वाभावः घटत्वादिजातौ पटत्वाभावश्च वर्तते, स चाभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते। एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते घटसमवेतं नीलं तत्समवेतं नीलत्वं तद्विशेषणता पीतत्वाभावे वर्तते, इति संक्षेपः॥

सीता

इन्द्रियार्थसन्निकर्षेति प्रत्यक्षलक्षणघटकः सन्निकर्षः कतिविधः इतिजिज्ञासायामाहमूले—प्रत्यक्षज्ञानेत्यादि। प्रत्यक्षज्ञानस्य हेतुः यः इन्द्रियार्थयोः सन्निकर्षः स षड्विध इत्यर्थः। संयुक्तसमवायः = स्वसंयोगिसमवेतत्वम्। संयुक्तसमवेतसमवायः स्वसंयोगिसमवेतसमवेतत्वम्। समवायः = स्वनिरूपितसमवायसम्बन्धावच्छिन्नाधयत्वम्। विशेषणविशेष्यभावः = विशेषणभावः विशेषणता विशेष्यभावः विशेष्यता च इत्यर्थः। चक्षुषा द्रव्यप्रत्यक्षे कार्य्यकारणभावं दर्शयति—द्रव्यवृत्तीति। 'अयं घट' इति चाक्षुषप्रत्यक्षस्थले द्रव्यं घटः तद्वृत्तिलौकिकविषयता 'अयं घट' इति ज्ञानीया विशेष्यताख्या विषयता तेन सम्बन्धेन निरुक्तम् 'अयंघटः,' इतिप्रत्यक्षं कार्य्यं घटे भवति, यत्र चक्षुः संयोगेन प्रथमं तिष्ठति। एवमेव अन्यत्रापि बोध्यमितिभावः। द्रव्यसमवेतानां गुणकर्म्मसामान्यानां प्रत्यक्षस्थले कार्य्यकारणभावमाह-द्रव्यसमवेतेति द्रव्यं घटः तत्समवेतो रूपादिगुणः उत्क्षेपणादि कर्म्म घटत्वादि जातिर्वा द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वादीनां प्रत्यक्षस्थले तमाह—द्रव्यसमवेतसमवेतेति। द्रव्यं घटः तत्मसवेतो रूपादिगुणः तत्समवेतो रूपत्वगुणत्वादिः। त्वाचप्रत्यक्षस्थलेऽपि उक्तां प्रक्रियां सञ्चारयति

अतत्वगिन्द्रियेति। सङ्गमनप्रक्रिया प्रागुक्ता वेदितव्या। मानसस्थले कार्य्यकारणभावप्रकारमाह—एवम त्मनानसेति। रासनघ्राणजस्थले संयुक्तसमवायस्य संयुक्तसमवेतसमवायस्यैव वा सन्निकर्षता इत्याह घ्राण सनयोरिति। समवेतसमवायस्थले समवेतः शब्दः तत्समवायः= तन्निरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वम् शब्दत्वकत्वादावस्तीत्यर्थः।

पद्मा

जिन सन्निकर्षोंसे प्रत्यक्ष ज्ञानकी उत्पत्ति होतीहै वे छः है। जैसे संयोग सयुक्तसमवाय संयुक्तसमवेतसमवाय समवाय समवेतसमवाय और विशेष्यविशेषणभाव। अभिप्राय यहहै कि उक्तसन्निकर्षोंके अन्दर कोईभी सन्निकर्ष जिस इन्द्रियका जिसविषयके साथ होता है उस इन्द्रियसे उसविषयका प्रत्यक्ष होताहैं। न्यायबोधिनीकार कहते हैं कि—विषयतासम्बन्धसे जहाँ प्रत्यक्ष उत्पन्न होताहै वहाँ उससे अव्यवहितपूर्वक्षणमे उसमे इन्द्रियका सन्निकर्ष अर्थात् प्रत्यक्षसम्पादकसम्बन्ध अवश्य रहताहै अतः कार्य्य और कारणको एकत्र स्थिति होनेके कारण, कार्य्यकारणभाव होताहै।

द्रव्यप्रत्यक्षे कः सन्निकर्षः?

**चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः।**

सीता

द्रव्यप्रत्यक्षस्य जनकः कः सन्निकर्षः इतिजिज्ञासायामाह मूले—चक्षुषेति। चक्षुःपदं घटपदं चोपलक्षणम् तेन चक्षुषा त्वचा मनसा वा कस्यापि द्रव्यस्य प्रत्यक्षे संयोगः सन्निकर्षः इतितदर्थः।

पद्मा

आँखसे अथवा त्वक्से किंवा मनसे किसीभी द्रव्यका प्रत्यक्ष जहाँ होता है वहाँ उस द्रव्यके साथ उस इन्द्रियका संयोग सन्निकर्ष अपेक्षित होताहैं। यही कारणहै कि बीचमें कोई व्यवधान रहनेपर प्रत्यक्ष नही होता।

द्रव्य समवेतप्रत्यक्षे कः सन्निकर्षः?

**घटरूपप्रत्यक्षजनने संयुक्तसमवायःसन्निकर्षः। चक्षुः संयुक्ते घटे रूपस्य समवायात्॥**

सीता

द्रव्यसमवेतानां शब्दभिन्नगुणकर्म्मसामान्यानां प्रत्यक्षे कः सन्निकर्षः कारणमिति जिज्ञासायामाह मूले घटरूपेति। घटरूपपदं गुणकर्म्मणोः द्रव्यगतसामान्यस्य चोपलक्षकम् संयुक्तसमवायपदेन च चक्षुःसंयुक्तसमवायघ्राणसंयुक्तसमवायादीनां ग्रहणं वेदितव्यम्। चक्षुषा घटरूपप्रत्यक्षस्थले सन्निकर्षं स्पष्टयति—चक्षुःसंयुक्ते इत्यादि।

पद्मा

किसीभी इन्द्रियसे किसीभी गुणका या किसीभी कर्म्मका किंवा द्रव्यगत किसीभी जातिका यदि प्रत्यक्ष करनाहो तो वहाँ इन्द्रियसंयुक्तसमवाय सन्निकर्ष अपेक्षित होगा। जैसे घटरूपका या घटचलनका या घटत्वजातिका यदि आँखसे प्रत्यक्ष होगा तो वहाँ चक्षुःसंयुक्तसमवाय अर्थात् चक्षुःसंयुक्तसमवेतत्व सन्निकर्ष होगा। क्योंकि चक्षुसे संयुक्त होगा घट उसमे समवाय सम्बन्धसे रहनेके कारण समवेत होगा रूप, समवेतत्व जायगा रूपमें। इसीप्रकार अन्य इन्द्रियोंसे अन्यगुणों का प्रत्यक्ष या कर्म्मोंका या जातियोंका प्रत्यक्ष उत्पादनीय होतो सन्निकर्ष समझना। जैसे घ्राणसंयुक्तसमवायसे गन्धका प्रत्यक्ष होगा।

द्रव्य समवेतसमवेतप्रत्यक्षे कः सन्निकर्षः ?

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायःसन्निकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्॥**

सीता

शब्दत्वभिन्नानां अनतीन्द्रियाणां गुणकर्म्मगतानां जातीनां प्रत्यक्षे कः सन्निकर्षः इति जिज्ञासायामाह–रूपत्वसामान्येति। बोधयति चक्षुःसंयुक्ते इत्यादि। अत्रापि चक्षुः पदेन श्रोत्रभिन्नानां सर्वेषां इन्द्रियाणाम्, रूपत्वपदेन च गन्धत्वादीनामपि ग्रहणं वेदितव्यम्।

पद्मा

शब्दको छोड़कर अन्य किसीभी गुणगत या कर्म्मगत गुणत्व कर्मत्वं रूपत्व उत्क्षेपणत्व आदि जातिओंके प्रत्यक्षस्थलमें इन्द्रियसंयुक्तसमवेतसमवाय सन्निकर्ष समझना चाहिये। इन्द्रिय पदसे श्रोत्रभिन्न इन्द्रियाँ गृहीत होंगी। जैसे

आँखसे यदि रूपत्वका प्रत्यक्ष करनाहो तो आँखसे संयुक्त होगा घट, उसमे समवेत अर्थात् समवायसम्बन्धसे रहनेवाला होगा रूप, तत्समवाय अर्थात् तत्समवेतत्व जायगा रूपत्वमे। सत्ता जातिका प्रत्यक्ष यदि द्रव्यगत रूपसे होगा, तो संयुक्तसमवाय सन्निकर्ष होगा। और यदि गुणकर्मगत रूपसे प्रत्यक्ष होगा तो संयुक्तसमवेतसमवाय सन्निकर्ष होगा।

शब्दसाक्षात्कारे कः सन्निकर्षः ?

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात्॥**

सीता

शब्दप्रत्यक्षे कः सन्निकर्षः इतिजिज्ञासायामाह मूले—श्रोत्रेणेति। शब्दस्य साक्षात्कारः शब्दसाक्षात्कारः शब्दश्रवणं तस्मिन्। समवायः स्वनिरूपितसमवेतत्वम्। उपपादयति—कर्णविवरेति।

पद्मा

शब्दके प्रत्यक्षमे अर्थात् श्रावणप्रत्यक्षमे समवाय होताहै सन्निकर्ष। क्यों कि श्रोत्रहै आकाशद्रव्य और शब्दहै उसका गुण। गुण द्रव्यमे समवाय सम्बन्धसे रहता है। अतः शब्द होगा श्रोत्रसमवेत, समवेतत्वसम्बन्ध उसमे जायगा।

शब्दत्वसाक्षात्कारे कः सन्निकर्षः ?

**शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्॥**

पद्मा

शब्दत्व कत्व खत्व आदि शब्दगत जातियों के प्रत्यक्षमे श्रोत्रका शब्दत्व के साथ होनेवाला समवेतसमवाय अर्थात् समवेतसमवेतत्वसन्निकर्ष कारण होता है। कानमे समवेत होताहै शब्द और उसमें समवायहै शब्दत्वका अतः श्रोत्रसमवेतसमवेतत्व शब्दत्वमे है।

अभावप्रत्यक्षे कः सन्निकर्षः ?

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्॥**

सीता

अभावस्य प्रत्यक्षे कः सन्निकर्षः इतिजिज्ञासायामाह मूले-अभावेति। विशेषणविशेष्यभावइत्यस्य विशेषणभावः विशेषणता विशेष्यभावः विशेष्यता। तथाचायमत्रनिष्कर्षः न्यायबोधिन्याः इन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्तसमवेतविशेषणता, इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता समवेतविशेषणता समवेतसमवेतविशेषणता इतिभेदेन विशेषणता पञ्चविधा। तत्तद्विशेषणतादीनां ग्रहणे चानन्त्यम्। तत्र द्रव्ये यदि कस्याप्यभावः प्रत्यक्षीकर्त्तव्यः यथा घटे कस्याप्यभावः तदा संयुक्तविशेषणता। द्रव्यगतगुणकर्म्मसामान्येषु रुपोत्क्षेपणघटत्वादिषु कस्याप्यभावस्य तथात्वे संयुक्तसमवेतविशेषणता। गुणकर्म्मगतजातिषु रुपत्वादिषु कस्याप्यभावस्य प्रत्यक्षीकरणे संयुक्तसमवेतसमवेतविशेषणता। शब्दत्वे कस्याप्यभाप्रत्यक्षे समवेतविशेषणता। शब्दत्वे कस्याप्यभावप्रत्यक्षे समवेतसमववेतविशेषणता। अभावेऽभावप्रत्यक्षे तत्तविशेषणविशेषणतानां अपेक्षा। एवं विशेष्यतापि इन्द्रियसंयुक्तविशेष्यता इन्द्रियसंयुक्तसमवेतविशेष्यता, इन्द्रियसंयुक्तसमवेतसमवेतविशेष्यता, समवेतविशेष्यता। समवेत समवेतविशेष्यता। संयुक्तविशेष्यविशेष्यतेत्यादि क्रमेण विशेष्यतानामपि भेदः। यत्राभाव विशेषणीकृत्य प्रतीतिः भूतलं घटाभाववत्भूतलरुपं घटाभाववत् इत्यादि तत्र विशेषणतानां यथासम्भवं प्रसरः। यत्रतुतं विशेष्योकृत्य प्रतीतिः यथा भूतले घटाभावः भूतलरूपे घटाभावः इत्यादि तत्र विशेष्यतानां यथासम्भवं प्रसर इतिविवेकः।

पद्मा

अभावोंके प्रत्यक्षमे विशेष्यविशेषणभाव सन्निकर्ष होताहै। यदि अभावको विशेषण बनाकर प्रतीति कीजाय जैसे "घर घड़ेके अभावसे युक्तहै" इत्यादि स्थलमें तो विशेषणता सन्निकर्ष अपेक्षित होगा। क्योंकि चक्षुःसंयुक्तविशेषणता

घटाभावमें रहेगी। किन्तु अभावको विशेष्य बनाया जाय तो विशेष्यता सन्निकर्षकी अपेक्षा होगी। जैसे घरमे घटभाव है इत्यादि प्रत्यक्षस्थलमे। क्योंकि चक्षुःसंयुक्त होगा घर उसका विशेष्य होगा घटभाव अतः विशेष्यता उसमे जायेगी।

प्रत्यक्षज्ञानस्य किं निष्कृष्टं लक्षणम्—

एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम्, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्॥

सीता

सन्निकर्षविवेचनेनानेन किं फलितमिति जिज्ञासायामाह मूले एवमिति। इन्द्रियेण विषयसन्निकर्षः ततः प्रत्यक्षमिति सन्निकर्षस्य व्यापारतया इन्द्रियस्य करणत्वम् इति प्रत्यक्षप्रमाकरणत्वरुप प्रत्यक्षत्वं तस्यैव इतिभावः। इतिप्रत्यक्षपरिच्छेदः।

पद्मा

इन्द्रियसे विषयका सन्निकर्ष होनेपर तादृश छः प्रकार सन्निकर्षके अन्तर्गत किसीसे पैदाहोनेवाला ज्ञानहै प्रत्यक्षप्रमा, उसका करणहैं इन्द्रियाँ, वे प्रत्यक्ष प्रमाणहैं। प्रत्यक्षपरिच्छेद समाप्त।

# अथानुमानपरिच्छेदः

अनुमानस्य किं लक्षणम्?—

अनुमितिकरणमनुमानम्।

(न्या०) अनुमानं लक्षयति—अनुमितीति। अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः अनुमितिः फलम्, कार्यमित्यर्थः। परामर्शस्य व्याप्तिज्ञानजन्यत्वाद्व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम्। अनुमितिकरणत्वमनुमानस्य लक्षणम्। अनुमानं व्याप्तिज्ञानम्। एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयानुमितिकरणत्वमुपपन्नम्॥

## सीता

अवगतं प्रत्यक्षप्रमाणम् लक्षणतः। अथ अनुमानप्रमाणस्य किं लक्षणमितिजिज्ञासायामाह अनुमितीति। अनुमितेःकरणम् अनुमितिकरणम्। तथाच अनुमितिकरणत्वम् अनुमानस्य लक्षणमित्यर्थः। किंतदितिजिज्ञासायामाह न्यायबोधिन्याम् अनुमितौइत्यादि। फलव्यापारयोर्ज्ञानं विना करणत्वं दुर्बोधमत आह परामर्श इत्यादि। परामर्शस्य व्यापारत्वोपपादनपूर्वकं व्याप्तिज्ञानस्य अनुमितिकरणत्वरूपमनुमानत्वमुपपादयति। अभावः यथा सन्निकर्षं द्वारीकृत्य प्रत्यक्षप्रमां प्रति करणतया इन्द्रियाणां प्रत्यक्षप्रमाणत्वम् तथा पर्वतोवह्निमान् इत्याद्यनुमितिं प्रति "वह्निव्याप्योधूमः पर्वते" इत्यादि परामर्शं द्वारीकृत्य 'वह्निव्याप्योधूम" इत्यादिव्याप्तिज्ञानस्य करणत्वात् अनुमानप्रमाणत्वमिति।

## पद्मा

जो अनुमतिके प्रति करणहै वहीहै अनुमान। जैसे पवतो वह्निमान् (पर्वत आगवालाहै) इसप्रकार अनुमितिके प्रति वह्निव्याप्योधूमः (धूम वह्निका व्याप्यहै अर्थात् वन्हिकेविना नही होसकता) यह व्याप्तिज्ञान है अनुमान प्रमाण। क्योंकि धूमको व्याप्य समझनेपर धूमको प्रत्यक्षतः पर्वतसे उठते देखकर "वन्हिव्याप्यधूमवान्पर्वतः" इत्यादि परामशज्ञान होताहै जोकि व्याप्तिज्ञानसे जन्य और व्याप्तिज्ञानजन्य अनुमितिके प्रति जनक होनेसे व्यापार होताहै। उससे पर्वतोवन्हिमान् इत्यादि अनुमिति उत्पन्न होतीहै। यह निश्चितहै कि व्याप्यवस्तु जहाँ रहतीहै। व्यापकवस्तु वहाँ जरूर रहती। अतः परामर्शके द्वारा व्याप्यधूमका पर्वतमे निश्चय होनेपर व्यापक वन्हिका निश्चयरुप अनुमिति होतीहै। इसीप्रकार सर्वत्र अनुमितिस्थलमे समझना चाहिये। मूलकारके मतमे परामर्श अनुमितिका करणहै व्याप्तिज्ञान नही।

अनुमितेः किं लक्षणम् ?

## परामर्शजन्यं ज्ञानमनुमितिः।

(न्या०) परामर्शजन्यमिति। परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय परामर्शजन्यत्वे सतीति विशेषणोपादानम्। परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम्॥

सीता

अनुमितेः किं लक्षणं इति जिज्ञासायामाह मूले परामर्शेति। न्यायबोधिन्यां तदर्थमाह परामर्शेति। वैशिष्ट्यं सामानाधिकरण्यं। तथाच परामर्शजन्यतासमानाधिकरणज्ञानत्वमनुमितेर्लक्षणमित्यर्थः। विशेषणविशेष्ययोः कृत्यमाह अत्रज्ञानत्वेति। ध्वंसंप्रति प्रतियोगिनः कारणतया परामर्शध्वंसस्य परामर्शजन्यत्वम्। ज्ञानत्वोक्तौ तत्र तद-भावादतिव्याप्तिवारणमितिभावः।

पद्मा।

"वह्निव्याप्योधूमः" अर्थात् धूम वह्निका व्याप्यहै इसज्ञानसे "वह्निव्याप्य-धूमवान्" पर्वतः "यह परामर्श ज्ञान होने पर जो पर्वतो वह्निमान् अर्थात् पर्वत आगवालाहै ऐसाज्ञान उत्पन्न होता है वही है अनुमिति।

परामर्शस्य किं लक्षणम्? किं च तत्स्वरूपमिति—

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः। तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः॥**

(न्या०) अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—व्याप्तिविशिष्टेति। व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारये—विशिष्टपदस्य प्रकारतानिरूपकत्वार्थकत्वात्, पक्षधर्मताज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात्, धर्मतापदस्य सम्बन्धार्थकत्वाच्च, कर्मधारय-समासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च व्याप्तिप्रकारकाभिन्न यत्पक्षसम्बन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते। एवं सति 'धूमो वह्निव्याप्यः आलोकवान्पर्वतः' इत्याकारकसमूहालम्बने परामर्शल-क्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय पक्षनिष्ठविशेष्यतानिरूपिता या हेतु-निष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालि ज्ञानं परामर्श इति निष्कर्षः। एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमि-तेर्लक्षणम्। अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्—पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित-संयोगसम्बन्धावच्छिन्नवह्नित्वाव-च्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्तिप्रकारतानिरूपि-

ता या धूमत्वावच्छिन्नप्रकारता तन्निरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कारणम्। स च निर्णयः 'वह्निव्याप्यधूमवान्पर्वतः' इत्याकारको बोध्यः॥

सीता

किं परामर्शस्य लक्षणम्? किमाकारश्चसः? किमाकारा च ततोऽनुमितिरितिजिज्ञासायामाह मूले—व्याप्तिविशिष्टेत्यादि। बोधयति-न्यायबोधिन्याम्। व्याप्तिविशिष्टेति। अयमर्थः। पक्षधर्मतायाः ज्ञानम् पक्षधर्म्मताज्ञानमिति षष्ठीसमासानन्तरं व्याप्तिविशिष्टं च तत् पक्षधर्म्मताज्ञानं व्याप्तिविशिष्टपक्षधर्म्मताज्ञानम् इतिसमासः। विशिष्टपदस्य-प्रकारतानिरूपकत्वमर्थः। तथाच व्याप्तिविशिष्टेत्यस्य व्याप्तिप्रकारता-निरूपकत्व मित्यर्थः। पक्षधर्म्मता = पक्षसम्बन्धः। तथाच व्याप्तिप्रकार-तानिरूपकत्वेसति पक्षसम्बन्धविषयकज्ञानत्वं परामर्शस्य लक्षणमित्यर्थः। एतावदुक्तौ "वह्निव्याप्योधूमः अलोकवान्पर्वतः" इति ज्ञानादपि अनुमित्यापत्तिः। तादृशज्ञानस्यापि व्याप्तिप्रकारकत्वात् पक्षसम्बन्ध-विषयकत्वाच्च इत्यतः निरूप्यनिरूपकभावापन्नविषयताघटितं तल्लक्षणं वाच्यमित्याह—एवंसति धूमोवह्नीत्यादि। अयंभावः "वह्निव्याप्यधूमवान्पर्वतः" इतिज्ञाने व्याप्त्यंशे वह्निः, धूमांशे व्याप्तिः, पर्वतांशे धूमः प्रकारः इति पर्वतनिष्ठविशेष्यतानिरूपितधूमनिष्ठप्रकारतानिरूपित-व्याप्तिनिष्ठप्रकारतानिरूपकज्ञानत्वं तत्र वर्त्तते। वह्निव्याप्योधूमः आलोकवान् पर्वतः इत्यत्र, वह्निव्याप्योधूमः धूमवान्पर्वत इत्यत्र वा ज्ञाने तु व्याप्तिप्रकारतानिरूपितविशेष्यतायाः धूमे एव विश्रान्तत्वेन व्याप्तिप्रकारतानिरूपितधूमप्रकारताया अभावेन न तयोः परामर्शत्वं इति न तमादायानुमित्यापत्तिरिति। अनुमितिं प्रति परामर्शः कारण-मितिसामान्यकार्य्यकारणभावः। तथासति व्यभिचारः, घटपरामर्शेण वह्न्यनुमित्यजननात् अतः तयोः विशिष्य कार्य्यरणभावमाह—अनुमिति-परामर्शयोरिति। अयमत्रसारार्थः समानाधिकरणयोर्विषयतयोः अभेदः इतिजगदीशादिमतम्। यथा वह्निव्याप्यधूमवान् पर्वत इतिज्ञानस्थले व्याप्तौ वह्निनिष्ठप्रकारतानिरूपितविशेष्यतापि विद्यते धूमनिष्ठविशे-ष्यतानिरूपितप्रकारतापि। धूमे व्याप्तिनिष्ठप्रकारता निरूपितविशे-ष्यताप्यस्ति पर्वतनिष्ठविशेष्यतानिरूपितप्रकारता पीति विशेष्यता प्रकारतयोरेवंविषयोरभेदे वह्निनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रका-

रतानिरूपितधूमनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताशालिज्ञानम् पर्वतोवह्निमानित्यनुमितिं प्रति परामर्शत्वेन कारणत्वम्। विषयतयोरूक्तविधयोर्नाभेदः अपितु अवच्छेद्यावच्छेदकभावः अर्थात् उक्तज्ञानस्थले वह्निप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना व्याप्तिनिष्ठप्रकारता, व्याप्तिप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना च धूमनिष्ठप्रकारता भविष्यति नतुतदात्मिकैवेतिगदाधरादिमतम्। एतन्मते पर्वतोवह्निमान् इत्यनुमितिं प्रति वह्निनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताशालिज्ञानं परामर्शत्वेन पर्वतोवह्निमान् इत्यनुमितिं प्रति कारणमिति।

पद्मा।

व्याप्ति हो जिसमें प्रकार एतादृश जो पक्षसम्बन्धविषयकज्ञान वही है परामर्श, जैसे "वह्निव्याप्यधूमवान्पर्वतः" अर्थात् पर्वत वह्निव्याप्यधूम वाला है यह ज्ञान है परामर्श। इस ज्ञान से "पर्वतोवह्निमान्" अर्थात् पर्वत वह्निवाला है यह अनुमिति होती है।

व्याप्तेः किं लक्षणम्?

**यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः॥**

( न्या० ) यत्र यत्रेति। यत्रपदवीप्सावशाद्धूमाधिकरणे यावति वह्निमत्त्वलाभाद्यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम्। तदेव स्पष्टयति—साहचर्यनियम इति। एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति। नियतत्वं व्यापकत्वम्॥ साहचर्यं नाम सामानाधिकरण्यम्। तथा च धूमनियतवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र वह्नेर्धूमव्यापकत्वं नाम धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। यथाहि–धूमाधिकरणे पर्वतचत्वरमहानसादौ वर्तमानो योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः। कुतः? पर्वतादौ वह्नेः सत्त्वात्। एव सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकघटत्वादिकमनवच्छेदकं वह्नित्वं वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते। इयमन्वयव्याप्तिः सिद्धान्तानुसारेण। पूर्वपक्षव्याप्तिस्तु—साध्याभाववदवृत्तित्वम्। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेद-

कसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव इति निष्कर्षः। तच्च केवलान्वयिन्यव्याप्तमितिसिद्धान्तानुसरणम् ॥

सीता

परामर्शलक्षणघटिकायाः व्याप्तेः किं लक्षणमितिजिज्ञासायामाह मूले–यत्रयत्रेति। विशदयति न्यायबोधिन्यां एतदर्थस्त्विति। तथाच हेत्वधिकरणे वर्त्तमानोयोऽभावः तत्प्रतियोगितायाः अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यत्वं व्याप्तेर्लक्षणमितिभावः। लक्षणं सङ्गमयति तथाहीति। साध्याभाववदवृत्तित्वरूपायाः पूर्वपक्षव्याप्तेः परिष्कृतं रूपमाह—साध्यतावच्छेदकसम्बन्धेत्यादि। साध्यतावच्छेदकसम्बन्धावच्छिन्ना सती साध्यतावच्छेदकावच्छिन्ना या प्रतियोगिता तन्निरूपकः सन् प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्येनावच्छिन्नो योऽभावः तदधिकरणनिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नावृत्तिता तादृशवृत्तितात्वावच्छिन्नाभावोव्याप्तिः इत्यर्थः। प्रतियोगितायांसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने "समवायेनवह्निर्नास्ती"त्यभावमादाय पर्वतोवह्निमान्धूमात् इत्यत्राव्याप्तिः। साध्यतावच्छेदकावच्छिन्नत्वानुपादाने तत्रैव महानसीयवह्न्यभावं वह्निजलोभयाभावं वा आदायाव्याप्तिः। प्रतियोगिवैयधिकरण्यदलानुक्तौ "अयंवृक्षःकपिसंयोगी एतद्वृक्षत्वात्" इत्यत्राव्याप्तिः। तत्रापि प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे धूमवान्वह्नेः इत्यत्रातिव्याप्तिः असम्भवो वा प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशे "विशिष्टसत्तावान् जातेः" इत्यत्रातिव्याप्तिः। वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे वह्निमान्धूमादित्यत्र कालिकेन समवायेन वा वृत्तितामादायाव्याप्तिः। वृत्तितात्वावच्छिन्नत्वस्य प्रतियोगितायामनिवेशे "धूमवान्वह्नेः इत्यत्र वृत्तित्वजलत्वोभयाभावमादायातिव्याप्तिः इतिबोध्यम्।

पद्मा।

जहाँ जहाँ धूम है वहाँ वहाँ वह्नि है इस प्रकार जो साहचर्य्य अर्थात् हेतु साध्य का सामानाधिकरण्य उसका जो नियम अर्थात् हेतुनियतसाध्यका सामा-

नाधिकरण्य वही है व्याप्ति । पर्य्यवसित अर्थ यह है कि हेतु के अधिकरण में रहने वाले अभाव की प्रतियोगिता का अनवच्छेदक जो साध्यतावच्छेदक तदवच्छिन्न जो साध्य तदधिकरणवृत्तित्व है व्याप्ति । पर्वतो वह्निमान् धूमात् इस स्थल में धूम के अधिकरण पर्वत आदि में रहने वाला अभाव, वह्निका अभाव मिलता नहीं, घटाभाव मिलता है, प्रतियोगित वच्छेदक हुआ घटत्व, अनवच्छेदक साध्यतावच्छेदक हुआ वह्नित्व तदवच्छिन्न वह्नि का सामानाधिकरण्य अर्थात् वह्नि के अधिकरण पर्वतादिमे अस्तित्व धूमको है, अतः लक्षणसमन्वय होता है । "धूमवान् वह्नेः" इस व्यभिचारी स्थल में वह्नि के अधिकरण तप्तलौहपिण्ड में साध्य धूमका अभाव पाया जाता है, अतः साध्यतावच्छेदक धूमत्व प्रतियोगितावच्छेदक ही हो जाता है अनवच्छेदक नही । अतः लक्षण हेतु में नही जाता, अतिव्याप्ति नही होती । यह सिद्धान्त—व्याप्ति है, पूर्वपक्षव्याप्ति है साध्याभाववदवृत्तित्व अर्थात् साध्याभाव के अधिकरण में नही रहना । "वह्निमान्" धूमात् यहाँ पर साध्य है वह्नि उसका अभाव पर्वत में नहीं जलह्रद में है, उसमें धूम नही रहता अतः अवृत्तित्व धूम में है । "धूमवान्वह्नेः" यहाँ पर धूमाभाव के अधिकरण अयोगोलक में वह्नि हेतु है ही अवृत्तित्व वह्निमें नही है । परन्तु ऐसा कहने पर साध्याभाव पद से "समवायेन वह्निर्नास्ति" यह अभाव लेकर उसके अधिकरण पर्वत में धूमको वृतित्व ही है अवृत्तित्व नही, अव्याप्ति होती है अतः "साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्व" लक्षण करना । अब 'समवायेनवह्निर्नास्ति" यह अभाव नहीं लिया जासकता, क्योंकि साध्यतावच्छेदकसम्बन्ध संयोग है समवाय नहीं । फिरभी पर्वत में 'महानसीयवह्निर्नास्ति' ऐसा अभाव लेकर उसके अधिकरण पर्वतमें धूम को वृत्तित्व होने के कारण अव्याप्ति होती है । अतः साध्यतावच्छेदकसम्बन्धावच्छिन्न-केवलसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्व लक्षण समझना । अब महानसीयवह्निर्नास्ति वह्निजलोभयंनास्ति ये सब साध्याभाव पदसे नही पकड़े जासकते । क्योंकि वे केवलसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक अभाव नहीं हैं । फिरभी "अयं वृक्षःकपिसंयोगी एतद्वृक्षत्वात्" यहाँ अव्याप्ति होती । क्योंकि मूलदेशावच्छेदेन कपिसंयोगाभाव के अधिकरण एतद्वृक्ष में एतद्वृक्षत्वहेतु को वृत्तित्व ही है । अतः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-प्रतियोगिवैयधिकरण्यावच्छिन्नाभावाधिकरणनिरुपितवृत्तित्वाभाव लक्षण समझना । फिरभी धूमवान् वह्नेः यहाँ अतिव्याप्ति होती क्योंकि कालिकसम्बन्धसे धूमका अधिकरण तायःपिण्डभी होताहै । अतः प्रतियोगिवैयधिकरण्यावाच्छिन्नधूमाभावाधिकरण पदसे आत्मगगनादि को लेकर तन्निरूपितवृत्तित्वाभाव वह्निहेतुमे चलाआताहै । इस

लिए "साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिवैयधिकरण्यावच्छिन्नाभाववदवृत्तित्व लक्षण समझना चाहिये। फिर भी घटोविशिष्टसत्तावान् जातेः इस स्थलमे "विशिष्टं शुद्धान्नातिरिच्यते" इस युक्तिके आधारपर प्रतियोगि पदसे शुद्ध सत्ता को लेकर प्रतियोगिवैयधिकरण्यावच्छिन्न विशिष्टसत्ताभाव का अधिकरण द्रव्यगुण कर्म्म नही होते अतः तादृश अधिकरणपदसे जाति आदि को लेकर उनमें जाति हेतुको अवृत्तित्व होनेके कारण अतिव्याप्ति होती। अतः "साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक—प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाववदवृत्तित्व लक्षण समझना चाहिये। फिरभी वह्निमान्धूमात् यहां अव्याप्ति होथी। क्योंकि संयोगेन वह्न्यभावके अधिकरण जलह्रदमे कालिकसम्बन्धसे धूमको वृत्तित्वही हैं अवृत्तित्वनहीं। अतः "साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक--प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाव, लक्षण समझना। फिरभी धूमवान् वह्नेः इस व्यभिचारी स्थलमें अतिव्याप्ति होती। क्योंकि धूमाभावाधिकरण तप्तायपिण्डमें वह्निको वृत्तित्व होनेपर भी तप्ताय पिड निरूपितवृत्तित्वजलत्वोभयंनास्ति इसप्रकार अवृत्तित्व वाह्निमें चलाआता। अतः वृत्तित्वाभाव की जगह वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव रूप अवृत्तित्व का निवेशकरके न्यायबोधिनीलिखित रूपसे पूर्ण परिष्कृत व्याप्ति लक्षण समझना चाहिये।

पक्षधर्मतायाः किं लक्षणम्?

## व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्म्मता ॥

सीता

परामर्शघटकपक्षधर्म्मतायाः किं लक्षणम् इतिजिज्ञासायामाह व्याप्यस्येति। व्याप्यस्य = व्याप्तिविशिष्टस्य हेतोः पर्वतादिवृत्तित्वम् = पर्वतादिनिरूपितवृत्तित्वम्। वस्तुतस्तु व्याप्तिविशिष्टहेतुपक्षयोः सम्बन्धत्वमेव पक्षधर्म्मतायाः लक्षणम् अन्यथा धूमवान् पर्वतइति ज्ञानस्य पक्षधर्मताज्ञानत्वाभावप्रसङ्गः तत्र पक्षवृत्तित्वविषयकत्वाभावात्।

पद्मा

साध्यनिरूपित व्याप्तिसे युक्त हेतुके साथ पक्षका जो सम्बन्ध वहीहै पक्षधर्मता। "वह्निव्याप्यधूमवान् पर्वतः" इसज्ञानमे भी धूम और पर्वतका सम्बन्ध विषय होताहै और "वह्निव्याप्यधूमः पर्वते" इसज्ञानमेंभी। अतः दोनों ज्ञान अनुमितिके प्रति कारण होतेहैं।

कतिविधमनुमानम् ?

अनुमानं द्विविधं स्वार्थं परार्थञ्च ॥

( न्या० ) अनुमानं विभजते—स्वार्थमिति।

पद्मा

अनुमिति दो प्रकार होतीहै स्वर्थानुमिति और परार्थानुमिति। अतः उसके कारण अनुमानभी दो प्रकार होतेहैं स्वार्थानुमान और परार्थानुमान।

किन्नाम स्वार्थाऽनुमानम् ?

स्वार्थं स्वानुमितिहेतुः। तथाहि—स्वयमेव भूयो दर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति, 'यत्र यत्र धूमस्तत्राग्निः' इति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः, इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते तदेव स्वार्थानुमानम् ॥

( न्या० ) स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम् ॥

सीता

अनुमानं कतिविधम् इतिजिज्ञासायामाह मूले अनुमानमिति। प्रतिज्ञाद्यवयवपञ्चकसमुदायाप्रयोज्यानुमानत्वम् स्वार्थानुमानस्य, प्रतिज्ञाद्यवयवपञ्चकसमुदायप्रयोज्यानुमानत्वम् परार्थानुमानस्य लक्षणमिति न्यायबोधिनीसारार्थः।

पद्मा

स्वार्थानुमान वह व्याप्तिज्ञान अथवा परामर्श है जो प्रतिज्ञा आदि पञ्चावयववाक्य-श्रवणके विना ही उत्पन्न होकर अनुमितिका सम्पादन करे। जैसे जो व्यक्ति रसोईघर आदिमें यह बराबर देखरखाहै कि "जहाँ जहाँ धूमहै वहाँ वहाँ आगहै"। फिर "पर्वत आगवालाहै या नही" इस प्रकार सन्देहशील वह व्यक्ति पर्वतसे उठते हुये धूमको देखकर उस पूर्वनिर्णीत व्याप्तिका स्मरण करताहै कि "जहाँजहाँ धूमरहताहै वहाँवहाँ आग रहतीहै। तदनन्तर "यह पर्वत वन्हिव्याप्यधूमवालाहै" ऐसा ज्ञान उस व्यक्तिको उत्पन्न होताहै। यही "लिङ्गपरामर्श" कहलाताहै। उससे उसव्यक्तिको "पर्वतोवन्हिमान्" पर्वत वह्निवाला है, ऐसी अनुमिति उत्पन्न होतीहै, यह होती है स्वार्थानुमिति। अतः इसके प्रति करण होनेवाला धूमोवन्हिव्याप्यः यह व्याप्तिज्ञान न्यायबोधिनीकारके मतमे, और "वन्हिव्याप्यधूमवान् पर्वतः" यह अन्नंभट्टके मतमे स्वार्थानुमान होताहै।

परार्थानुमानस्य किं लक्षणम्? तत्स्वरूपञ्च किमिति—

**यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्। यथा पर्वतो वह्निमान् धूमवत्वात्। यो यो धूमवान्स स वह्निमान्। यथा महानसम्। तथाचायम्। तस्मात्तथेति। अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते।**

(न्या०) न्यायप्रयोज्यानुमानं परार्थानुमानम्। न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम्। अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम्॥

पद्मा

पूर्वोक्त प्रक्रियासे धूमको देखकर स्वयं अग्निकी अनुमिति करके दूसरोंको अग्निकी अनुमिति करानेके लिए जिस पञ्चावयव वाक्यका प्रयोग अनुमापयिता करत है वह वाक्यहै परार्थानुमान। अर्थात् पञ्चावयववाक्यजन्य जो श्रोताको व्याप्तिज्ञान अथवा परामर्श होताहै वहहै परार्थानुमान। क्योंकि "पर्वतवह्निवालाहै, यतः उसमे धूमहै, जो जो धूमवाला होताहै वह अग्निवाला होताहै जैसे रसोईघर, पर्वतभी धूमवालाहै, अतः यह भी अग्निवाला है। इसप्रकार उक्तवाक्यसे धूमका ज्ञानहोनेपर श्रोताभी "पर्वत अग्निवालाहै"

इसप्रकार अनुमिति करताहै। धूम और अग्निको यहाँ उपलक्षण समझना चाहिये। इसीप्रकार अन्य हेतुसाध्यक स्थलमे भी समझना चाहिये।

पञ्चावयवाः के ?

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वह्निमानिति प्रतिज्ञा॥ धूमवत्त्वादिति हेतुः। यो योधूमवान् स स वह्निमानित्युदाहरणम्। तथा चायमित्युपनयः। तस्मात्तथेति निगमनम्॥

स्वार्थानुमिति परार्थानुमित्योः किं करणम्?

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्॥

पद्मा।

स्वार्थानुमिति और परार्थानुमिति दोनों प्रकार अनुमितिके प्रति लिङ्गपरामर्श अर्थात् "वह्निव्याप्यधूमवान्पर्वतः" किं वा "वह्निव्याप्योधूमः पर्वते" यहज्ञान करण होता है अतः वही लिङ्गपरामर्श अनुमान अर्थात् अनुमिति का करण है।

कतिविधं लिंगम्, व्यतिरेकिणश्च किंलक्षणम्?

लिङ्गं त्रिविधम्। अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयतिरेकि यथा वह्नौ साध्ये धूमवत्त्वम्। यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः॥

(न्या०) अन्वयेनेति। व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः। व्यतिरेकेणेति। व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयं च व्याप्तिर्यत्र यत्र वह्न्यभाव-

स्तत्र तत्र धूमाभाव इति। यत्रपद वीप्सया वह्न्यभाववति यावति धूमाभावग्रहेण यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवञ्च वह्न्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन [ धूमवत्त्वम् ] व्यतिरेकित्वेन, धूमव्यापकवह्निसामानधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गीयते। व्यतिरेकपरामर्शस्तु-वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत इत्याकारकः॥

## सीता

लिङ्गपरामर्शघटकं लिङ्गम् कतिविधम् इति जिज्ञासायामाह मूले लिङ्गंत्रिविधमिति। तत्रैवान्वयव्यतिरेकिलक्षणमाहअ न्वयेनेत्यादि। साध्यनिरुपितान्वयव्याप्तिमत्वेसति साध्यनिरुपितव्यतिरेकव्याप्तिमत्वम् अन्वयव्यतिरेकिणोलक्षणम्। परिष्कृताकारस्तु हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणत्वेसति साध्याभावव्यापकीभूताभावप्रतियोगित्वम् अन्वयव्यतिरेकिणोलक्षणमिति। यत्रयत्र साध्याभावः तत्रतत्र हेत्वभावः इतिज्ञानस्यैव व्यतिरेकसहचारज्ञानतया वह्न्यभावे एव धूमाभावव्याप्तिलाभात् कथंधूमस्य वन्हिनिरुपितव्याप्त्याश्रयता? इति जिज्ञासायामाह न्यायबोधिन्यां स्वाश्रयीभूतेति। स्वं वन्ह्यभावनिष्ठाव्याप्तिः तदाश्रयीभूताभावो वन्ह्यभावः तत्प्रतियोगी धूम इति प्रतियोगित्वसम्बन्धः धूमे, तेनच सम्बन्धेन स्वपदग्राह्यवन्ह्यभावनिष्ठव्याप्तिः समायाति धूमे, इति तस्य व्यतिरेकव्याप्तिमत्त्वम् सुलभमितिभावः। व्यतिरेक परामर्शाकारजिज्ञासायामाह व्यतिरेकपरामर्शेति वह्न्यभावस्यव्यापकीभूतो यः अभावः, तस्य यः प्रतियोगी तद्वान् इतितदर्थः। व्यापकीभूतोऽभावः धूमाभावः।

## पद्मा

लिङ्ग अर्थात् अनुमापक हेतु तीन प्रकार होते हैं, जैसे अन्वयव्यतिरेकी केवलान्वयी, और केवलव्यतिरेकी। जिसमें साध्य की अन्वयव्याप्ति और व्यातिरेक व्याप्ति दोनों हो वह हेतु होता है अन्वयव्यतिरेकी। जैसे पर्वतोवह्निमान धूमान् इस स्थल में धूम। क्योंकि जहाँ जहाँ महानस आदि में धूम रहता है वहां आग भी रहती है अतः धूम में धूमव्यापकवह्निसामानाधि

करणस्वरूप अन्वयव्याप्ति भी है। और जहां ह्रद आदिमे वह्नि नही है वहां धूम भी नही है, अतः वह्न्यभावव्यापकीभूतधूमाभावप्रतियोगित्वरुप व्यतिरेक व्याप्ति भी है।

केवलान्वयिनः किं लक्षणम्?

**अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा घटोऽभिधेयः प्रमेयत्वात्पटवत्। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च॥**

(न्या०) केवलान्वयिनो लक्षणमाह—अन्वयेति। केवलान्वयिसाध्यकत्वं हेतोः केवलान्वयित्वम्। साध्ये केवलान्वयित्वं चात्यन्ताभावाप्रतियोगित्वम्। तथा च अभावाप्रतियोगिसाध्यकत्वं केवलान्वयिहेतोर्लक्षणम्। एतच्च लक्षणं हेतो र्व्यतिरेकित्वेऽपि संगच्छते। साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्वयीति मूलकारोक्तं लक्षणमुपपन्नम्। नचात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम्। स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात्। एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति नव्याः।

सीता

केवलान्वयिनः किं लक्षणम् इतिजिज्ञासायामाह मूले अन्वयमात्रेति। न्यायबोधिन्यां व्यातिरेकेति। लघुलक्षणमाह अथवाकेवलान्वयीति। अत्यन्ताभावाप्रतियोगिसाध्यानुमापकत्वमितितदर्थः। घटोऽभिधेयः प्रमेयत्वात् कम्बुग्रीवादिमत्त्वाद्वा इत्यत्र अभिधेयत्वस्य साध्यस्य सर्वत्र सत्त्वेन तदन्यन्ताभावाभावात् तस्याप्रतियोत्वेन तत्साधकस्य प्रमेयत्वादेः केवलान्वयिलिङ्गत्वम्। गगनाभाववान् संयोगाभाववान् वा द्रव्यत्वादित्यादौ हेतौ केवलान्वयित्वाव्याप्तिः गगनाभावे गगनाभावाभावप्रतियोगित्वस्य, संयोगाभावे संयोगाभावाभावप्रतियोगित्वस्य सत्त्वेन हेतौ अत्यन्ताभावाप्रतियोगिसाध्यकत्वाभावात् इत्याशङ्क्य निषेधति नचात्यन्तेति। निषेधहेतुमाह स्वविरोधीति। स्वं केवलान्वयित्वेनाभिमतं वस्तु। अयंभावः न केवलम् अत्यन्ताभावाप्रतियोगिसाध्यानुमापकत्वम् उच्यते हेतौ केवलान्वयित्वम् अपितु

स्वविरोधीसन् वृत्तिमान् यः अत्यन्ताभावः तदप्रतियोगिसाध्यानुमापकत्वम्। तथाच अत्यन्ताभावपदेन संयोगाभावाभावो गगनाभावाभावश्च नशक्यते धर्त्तुम् संयोगाभावाभावस्य संयोगस्य अव्याप्यवृत्तितया संयोगाभावाधिकरणे वृत्तित्त्वेन संयोगाभावविरोधित्वाभावात्। गगनाभावाभावस्यच गगनस्यावृत्तित्वेन वृत्तिमत्त्वाभावात्। इति तादृशाभावो घटाद्यभावः निरुक्ताभावयोः तदप्रतियोत्वेन तदनुमापकत्वस्य च हेतावक्षतत्वमिति। नवीनसम्मतं साध्यगतं केवलान्वयित्वमाह एकजातीयेति। तथाचैकजातीयसम्बन्धेन सर्वत्रविद्यमानसाध्यानुमापकत्वं हेतौ केवलान्वयित्वमिति सरलार्थः।

पद्मा

जिस हेतु में साध्य की व्यतिरेकव्याप्ति नहीं जाती केवल अन्वयव्याप्ति जाती है वह हेतु होता है केवलान्वयी। जैसे "घटोऽभिधेयः प्रमेयत्वात्" अर्थात किसी शब्द का वाच्य अर्थ है क्योंकि यथार्थज्ञानका विषय है एतादृश अनुमान स्थल मे प्रयेत्व हेतु केवलान्वयी है। क्योंकि यहां साध्य और हेतु दोनोंही एसे हैं जिनका अत्यन्ताभाव कहीं नही मिलता। अतः व्यतिरेक व्याप्ति नहीं है, केवल प्रमेयत्वव्यापक अभिधेयत्व का सामनाधिकरण्यरूप अन्वयव्याप्ति है।

केवलव्यतिरेकिणः किं लक्षणम्, तत्स्वरूपञ्च किम् ?

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्। यदितरेभ्यो न भिद्यते न तद्गन्धवत्। यथा जलम्। न चेयं तथा। तस्मान्न तथेति। अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति। पृथ्वीमात्रस्य पक्षत्वात्।

(न्या०) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति। अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम्। यथा-पृथिवीति। अत्र पृथिवीत्वावच्छिन्नं पक्षः। पृथिवीतरजलाद्यष्टभेदः साध्यः। गन्धवत्त्वं हेतुः। अत्र यद्गन्धवत्तदितरभेदवदित्यन्वयदृष्टान्ताभावाद् गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात्। किन्तु यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा

जलादिकमिति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलमिति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवंप्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकिपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका, पृथिवी इतरभेदवतीत्याकारकानुमितिर्जायत इति तत्त्वम् । यथाश्रुतमूलार्थस्तु—यथा जलमिति । जलं इतरभेदाभाववत् इतरभेदाभावव्यापकगन्धाभाववच्च ।इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः । न चेयंतथा । इयं पृथिवी तथा इतरभेदाभावव्यापकगन्धाभाववती न किन्तु तदभावात्मकगन्धवती। तस्मान्न तथेति। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शः तस्मादिति पञ्चम्यन्ताद् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः । तथा इतरभेदाभाववती । न इत्यस्याभावोर्थः । तथाच इतरभेदाभावाभाववती इतरभेदवतीत्यर्थः ॥

## सीता ।

केवलव्यतिरेकिणः किं लक्षणम् इतिजिज्ञासायामाह मूले—व्यतिरेकेति । न्यायबोधिन्यां तदर्थमाह निश्चितान्वयेति । अत्रायं सारांशः पृथिवी पृथिवीतरभेदवती गन्धवत्वात् इत्यनुमानस्थले अन्वयव्याप्तिर्न शक्या बोद्धुम् । पृथिव्यां साध्यस्येतरभेदस्य सन्दिग्धत्वेन अन्यत्रच तदभावस्य पृथिवीतरत्वस्य निर्णयेन कमप्यधिकरणमादाय हेतुव्यापकसाध्यसामानाधिकरण्यस्य ज्ञानासम्भवात् । किन्तु यत्रयत्र जलादौ पृथिवीतरभेदस्याभावः पृथिवीतरत्वं विद्यते तत्रतत्र गन्धस्याभावः अस्तीतिव्यतिरेकसहचारग्रहेण पृथिवीतरभेदाभावव्यापकीभूतगन्धाभावप्रतियोगी गन्ध इति व्यतिरेकव्याप्तिज्ञानं भवितुमर्हतीति हेतौ गन्धवत्त्वस्य केवलव्यतिरेकित्वमिति । अत्र यद्यत् पृथिवीतरत् तत्तद् गन्धाभाववत् इति व्यतिरेकसहचारग्रहे पृथिवीतरभेदस्य साध्यता । यदि च यत्रयत्र पृथिवीतरत्वं तत्रतत्र गन्धाभाव इतिग्रहः तदा पृथिवीतरत्वात्यन्ताभावस्य साध्यतेति-बोध्यम् ।

पद्मा

जिसहेतुमें साध्यकी अन्वयव्याप्ति न हो केवल व्यतिरेकव्याप्तिहो वह हेतु होगाहै केवलव्यतिरेकी जैसे पृथिवी पृथिवीतर जलआदिसे भिन्नहै क्योंकि पृथिवीमे गन्धहै। जो पृथिवीतर जलादिसे भिन्न नहीहै अर्थात् पृथिवीसे इतर हीहै उसमें गन्ध नहीहै, जैसे जलमें। यह पृथिवी किन्तु ऐसी अर्थात् गन्धाभाववती नही है अपितु गन्धवतीहै। अतः पृथिवीतरभेदाभाववती नही अपितु पृथिवीतरभेदवतीहै। एतादृश पञ्चावयववाक्यस्थलमें गन्धवत्त्व हेतु केवलव्यतिरेकीहै। क्योंकि जो गन्धवान् है सो पृथिवीतरभेदवान् है इस प्रकार अन्वयव्याप्तिग्राहक सहचारग्रह किसी अधिकरणमे नही होता। घट आदिको दृष्टान्त नही बनाया जासकता, क्योंकि वहभी पृथिवी होनेके कारण पक्षही है।

पक्षस्य किं लक्षणम् ?

**सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः ॥**

( न्या० ) पक्षलक्षणमाह—सन्दिग्धेति। साध्यप्रकारकसंदेहविशेष्यत्वं पक्षत्वम्। इदं च लक्षणमनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रायेण प्राचीनैः कृतम्। गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम् ॥

सीता

पक्षस्य किं लक्षणम् ? इतिजिज्ञासायामाहमूले—सन्दिग्धेति। अत्र न्यायबोधिन्याः अयं सारांशः साध्यप्रकारकः यः पर्वतोवह्निमान्नवा ? इत्यादिः सन्देहः तद्विशेष्यत्वं पर्वतादौ पक्षत्वमिति मूलार्थः। किन्तु गृहे सुप्तस्य घनगर्जनश्रवणेन जायमानगगनं मेघवदित्यनुमितिस्थले तत्पूर्वं सुषुप्त्या सन्देहाभावात् गगनेऽव्याप्तिः। अतः अनुमित्युद्देश्यत्वम् पक्षस्य लक्षणमिति वाच्यम्। तथाच नाव्याप्तिरिति।

पद्मा

जिसमे साध्यका सन्देहहो वहहै पक्ष। जैसे पर्वतोवह्निमान् धूमात् इस अनुमितिस्थलमे पर्वत। क्योंकि अनुमितिके पहले "पर्वत वह्निवाला है या नही"

यह सन्देह होताहै । वस्तुतः जो अनुमितिमे उद्देश्यहो अर्थात् जिस धर्म्मीमे अनुमिति कीजाय वहीहै पक्ष । सन्देहघटित लक्षण इसलिये ठीक नही कि अनुमितिके पहले सवजगह सन्देह रहेगाही यह कोई नियम नही ।

सपक्षलक्षणं किम् ?

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ।**

( न्या० ) सपक्षलक्षणमाह—निश्चितेति । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । निश्चयश्च महानसं वह्निमदित्याकारकः ।

सीता

सपक्षस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—निश्चितसाध्येति । साध्यः प्रकारो यत्र एतादृशो यः "महानसं वह्निमत्" इत्यादिनिश्चयः तद्विशेष्यत्वम् सपक्षस्य लक्षणम् । महानसादेः तादृशतया तत्र तत्र लक्षणसमन्वयः ।

पद्मा

जिसमे अनुमितिके पहलेसे ही साध्यका निश्चय हो वह होताहै सपक्ष । जैसे "पर्वतोवह्निमान्धूमात्" यहांपर रसोईघर आदिहैं सपक्ष, क्योंकि उनमें पहले सेही प्रत्यक्षतः वह्निका निश्चय रहताहै ।

विपक्षलक्षणं किम् ?

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ।**

( न्या० ) विपक्षलक्षणमाह—निश्चितसाध्याभावेति । साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः ।

सीता

विपक्षस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—निश्चितसाध्याभावेति । साध्यस्याभावः प्रकारो यत्र एतादृशो यः "ह्रदो वह्न्यभाववान्" इत्यादिर्निश्चयः तद्विशेष्यत्वम् विपक्षस्य लक्षणमित्यर्थः । पर्वतोवह्निमान्धूमात् इत्यादिस्थले ह्रदादेस्तादृशत्वात्विपक्षत्वम् ।

पद्मा

जिसमे साध्यके अभावका निश्चय हो वह कहलाताहै विपक्ष। "पर्वतो वह्निमान्धूमात्" यहां जलह्रद आदिहैं विपक्ष। क्योंकि उनमें वह्न्यभाव का निश्चय सभीको होताहै।

अथ के हेत्वाभासाः?

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।**

(न्या०) एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति-सव्यभिचारेति। हेतुवदाभासन्त इति हेत्वाभासाः। दुष्टहेतव इत्यर्थः। दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः। एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः। यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यस्य लक्षणम्। हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा। अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः। पर्वतो वह्निमान्, प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

सीता

व्याप्तिपक्षधर्म्मत्वाभिः सद्धेतो निरूपणे विहिते तद्विरोधितया दुष्टहेत्वात्मके हेत्वाभासे समुपस्थिते किं हेत्वाभासस्य लक्षणं कतिचते इति प्रसङ्गाज्जिज्ञासायामाह मूले सव्यभिचारेति। अत्र हेत्वाभासपदस्यावृत्त्या पञ्चहेत्वाभासाः हेत्वाभासाः इतिपाठो बोध्यः। तत्र एकस्य हेत्वाभासपदस्य रूढ्या दुष्टहेत्वर्थकत्वात् लक्ष्यपरता। अपरस्यच हेतुवत् आभसन्ते इति हेत्वाभासाः एवं योगेन लक्षणपरता। तथाच हेतुवदाभासमानाः हेत्वाभासाः सव्यभिचारविरुद्धसत्पतिपक्षासिद्धबाधिताः पञ्चेति वाक्यान्वयः। सव्यभिचारश्च विरुद्धश्च सत्प्रतिपक्षश्च असिद्धश्च इति सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः। इति द्वन्द्वः समासः। अत्र न्यायबोधिन्याः अयं सारांशः हेतुवत् आभासन्ते इति हेत्वाभासाः इत्यनेन तेषां न तत्त्वतः अनुमापकत्वं

अपितुदुष्टत्वमिति सूच्यते। दुष्टत्वञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बत्वेनदोषविशिष्टत्वम् इति स्थिते, दोषस्य किं लक्षणमिति- जिज्ञासायां "यद्विषयकत्वेन ज्ञानस्य अनुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वम् इति लक्षणम् वेदितव्यम्। यद्विषयकत्वेनेतितृतीयार्थः विशिष्टत्वम् तथाच यद्विषयकत्वविशिष्टंज्ञानं, फलतः यद्विषयकज्ञानम् अनुमितिं, तत्करणभूतं व्याप्तिज्ञानम्, परामर्शंवा प्रतिबध्नाति तत्त्वम् दोषस्य लक्षणमितिसरलार्थः। यथा "ह्रदोवह्निमान् धूमात्" इत्यत्र यत् पदेन वह्न्यभावद्ध्रदं गृहीत्वा यद्विषयकं = वह्न्यभाववद्ध्रदविषयकं "वह्न्यभाववान्ह्रदः" इतिज्ञानम् अनुमितिं = ह्रदोवह्निमान्" इत्याकारानुमितिं प्रतिबध्नाति तत्त्वं वह्न्यभाववद्ध्रदे इति वह्न्यभाववद्ध्रदो बाधदोषः। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तस्य धूमे सत्त्वात् "ह्रदोवह्निमान्धूमात्" इत्यत्र धूमस्य बाधितत्वं दुष्टत्वम्। तथाहि स्वं वह्न्यभाववद्ध्रदोदोषः तज्ज्ञानम् "ह्रदोवह्न्यभाववान् धूमश्च" इति ज्ञानम् तद्विषयप्रकृतहेतुतावच्छेदको धूमत्वं इति प्रोक्तसम्बन्धस्य धूमे सत्त्वात् तेन सम्बन्धेन धूमस्य वन्ह्यभाववद्ध्रदात्मक दोषवत्तया बाधितत्वरूपं दुष्टत्वम्। व्यभिचारज्ञानस्यानुतिं प्रत्यविरोधितया व्यभिचारे दोषत्वस्य व्यभिचारिणिच व्यभिचरितत्वरूपस्य, दुष्टत्वस्य सम्पादनाय दोषलक्षणे अनुमितिकरणनिवेश इति।

प्रभा

जिसके ज्ञानसे अनुमिति अथवा परामर्श रुकजाय, नहोने पावे, वह होताहै दोष। वहभी कहलाताहै हेत्वाभास। जैसे ह्रदो वह्निमान् धूमात् यहाँपर "वह्न्यभाववद्ध्रद" का "वह्न्यभाववान् ह्रदः" अर्थात् ह्रद अग्निका अभाववालाहै इसप्रकार ज्ञान होने पर "ह्रदोवह्निमान्" यह अनुमिति नही होनेपाती क्योंकि कहीं किसीवस्तुके ज्ञानके प्रति वहाँ उसवस्तुका अभावका ज्ञान प्रतिबन्धक होताहै। अतः ज्ञानका विषय "वह्न्यभाववद्ध्रद" बाधनामक दोष होताहै। वह दोष "एकज्ञानविषयत्व" नामक सम्बन्धसे धूमपर आताहै अतः उक्तस्थलमें धूम हेतु बाधित दुष्ट कहलाताहै। व्यभिचारनामक दोषका ज्ञान अनुमितिको नहीं रोकताहै किन्तु अनुमितिके करण परामर्शको, अतः लक्षणमें यह कहाजाताहै कि "अनुमितिके प्रति किंवा अनुमितिकरणपरामर्शके प्रति प्रतिबन्धक हो। ऐसा कहनेपर धूमवान्वह्नेः" यहाँपर 'धूमाभाववद्वृत्तिर्वह्निः" अर्थात् वह्नि हेतु

धूमाभावके अधिकरण अयोगोलक में रहताहै एतादृश व्यभिचारज्ञान अनुमितिको भलेही न रोके किन्तु "धूमाभाववदवृत्तिर्वह्निः" अर्थात् वह्निहेतु धूमाभावके अधिकरणमे नहीरहता" इसप्रकार पूर्वपक्षव्याप्तिज्ञानको रोकने के कारण तद्घटित परामर्श को अवश्य रोकेगा अतः प्रतिवन्धकज्ञानका विषय होनेके कारण व्यभिचारमें लक्षण समन्वय होगा। विरोध सत्प्रतिपक्ष असिद्धि इन दोषो के ज्ञानभी अनुमिति अथवा परामर्शको अवश्य रोकेगें अतः प्रतिबन्धकज्ञानविषय होनेके कारण, सभी दोषोमें "अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्व" इस दोष लक्षणका समन्वय होगा।

सव्यभिचारस्य हेत्वाभासस्य किं लक्षणं के च भेदाः?

**सव्यभिचारोऽनैकान्तिकः। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्।**

सीता

सव्यभिचारस्य किं लक्षणम्? कतिविधश्चसः इतिजिज्ञासायामाह मूले—सव्यभिचारेति। तथाच अनैकान्तिकत्वम् सव्यभिचारस्यलक्षणम्। तत्रानैकान्तिकस्यभेदः कः इतिजिज्ञासायामुक्तं साधारणेत्यादि। तथाच साधारणासाधारणानुपसंहार्य्यन्यतमत्वं सव्यभिचारापरनाम्नः व्यभिचारिणो लक्षणमित्यर्थः। व्यभिचारस्य खलु दोषस्य तर्हि लक्षणं साधारणत्वासाधारणत्वानुपसंहारित्वान्यतमत्वम् वेदितव्यम्। अन्यतमत्वं च सर्वत्र तावद्भिन्नभिन्नत्वरूपं बोध्यम्।

पद्मा

अनैकान्तिकत्वस्वरूप व्यभिचारित्व है सव्यभिचारका लक्षण। सव्यभिचारके प्रभेद तीन हैं साधारण असाधारण और अनुपसंहारी।

साधारणस्य हेत्वाभासस्य किं लक्षणम्?

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतो वह्निमान् प्रमेयत्वादिति। प्रमेयत्वस्य वह्न्यभाववतिहृदे विद्यमानत्वात्।**

सीता

साधारणस्य सव्यभिचारस्य किं लक्षणम् इति जिज्ञासायामाह मूले—तत्र साध्याभावेति । तत्र = सव्यभिचारत्रयमध्ये । साध्याभाववद्वृत्तित्वमित्यस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वम् अर्थः । निरुक्ते साधारण्ये दोषसामान्यलक्षणसन्वय एव कथं प्रथममितिजिज्ञासायामाह—वह्निमान् प्रमेयत्वादिति । संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताकाभाववदयोगोलकवृत्तिर्वह्निः इतिव्यभिचारज्ञानेजाते तादृशायोगोलकावृत्तिर्वह्निः इति पूर्वपक्षव्याप्तिज्ञानरुपस्या तद्घटितस्य परामर्शस्य वा प्रतिवन्धात् अनुमितिकरणप्रतिवन्धकज्ञानविषयत्वस्य वाह्निनिष्ठधूमाभाववद्वृत्तित्वे सत्त्वाल्लक्षणसमन्वयो धूमवान् वह्नेरित्यत्र ।

पद्मा

जो हेतु साध्याभावके अधिकरणमेभी रहताहै वह होताहै साधारण अनैकान्तिक अर्थात् साधारणव्यभिचारी, जैसे "पर्वतोवह्निमान् प्रमेयत्वात्" इसस्थलमें प्रमेयत्वहेतुहै साधारण । क्योंकि वह्निके आधार पर्वतमे जैसे प्रमेयत्वहै, तैसे वह्नयभाव वाले जलहृदआदिमे भी वह प्रमेयत्वहै । प्रमेयत्व केवलान्वयी है वह सभी वस्तुओं मे रहताहै यह बात पहले बतलायी जाचुकीहै ।

असाधारणाऽनैकान्तिकस्य किं लक्षणम् ?

**सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा शब्दो नित्यः शब्दत्वादिति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ।**

(न्या० ) असाधारण इति । सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम् । हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यासामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

सीता

असाधारणस्य किं लक्षणमितिजिज्ञासायामाह मूले-सर्वसपक्षेति । तत्रैवोदाहरणमाह-यथाशब्दोनित्यइत्यादि । व्याचष्टे न्यायबोधन्यां सर्व-

सपक्षेति । साध्यसामानाधिकरण्याभावप्रकारकनिश्चयविशेष्यत्वम् असाधारणस्य लक्षणमिति पर्य्यवसितोऽर्थः। तथाहि शब्दो नित्यः शब्दत्वात् इत्यत्र न्यायसिद्धान्ते शब्दस्यानित्यतया शब्दत्वे नित्यत्व समानाधिकरण्याभावेन शब्दत्वं नित्यत्वाधिकरणपरमाण्वाकाशादिनिरूपितवृत्तित्वाभाववत् इति नित्यत्वसामानाधिकरण्याभावप्रकारकज्ञानसम्भवेन तद्विशेष्यकत्वस्य शब्दत्वे हेतौ सत्त्वम् इति। दोषसामान्यलक्षणसमन्वयं भङ्ग्या समुपदिशति हेतौ साध्येत्यादि। सिद्धान्तान्वयव्याप्तिशरीरे हेतौ साध्यसामानाधिकरण्यनिवेशात् तज्ज्ञानं प्रति "साध्यासमानाधिकरणोहेतुः" इतिज्ञानं प्रतिबन्धकमिति कृत्वा तद्घटितान्वयपरामर्शं प्रत्यपि विरोधीति अनुमितिकरणप्रतिबन्धकतया तद्विषयत्वस्य साध्यासामानाधिकरण्ये हेतुनिष्ठे-सत्त्वात् दोषसामान्यलक्षणसमन्वय इतिभावः।

पद्मा

जो हेतु किसी सपक्ष अथवा विपक्षमे न रहे किन्तु पक्षमे रहे, वह हेतु होताहै असाधारण। जैसे "शब्दः नित्यः शब्दत्वात्" इस स्थलमे शब्दत्व हेतुहै असाधारण। क्योंकि वह न तो सपक्षभूत आत्माआदि नित्योंमे रहताहै और न अनित्य घटआदि विपक्षोंमे। केवल पक्षभूत शब्दमे रहताहै। न्याबोधिनीकार कहतेहैं कि "साध्यासामानाधिकरण्य" अर्थात् साध्यके अधिकरणमे न रहना" है असाधारण्यरूप द्वितीय व्यभिचार। इसका ज्ञान होनेपर साध्यसामानाधिकरण्य घटित सिद्धान्त अन्वयव्याप्ति घटित परामर्श रुकताहै अतः यह दोष कहलाताहै।

अनुपसंहारिणः किं लक्षणम् ?

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ॥

( न्या० ) अनुपसंहारिणं लक्षयति-अन्वयेति। उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः। सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः॥

सीता

अनुपसंहारिणः तृतीयस्य सव्यभिचारस्य किं लक्षणम् इति जिज्ञासायामाह मूले—अन्वयव्यतिरेकेति। लक्षणस्य पर्यवसितं रूपमाह न्यायबोधिन्यां किञ्चिद्विशेष्यकेति। किञ्चिद्विशेष्यं यस्य एतादृशोयः निश्चयः तदविषयः साध्यं यस्यः हेतोः स किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकः तस्य भावः तत्त्वम् तस्मिन् सति, किञ्चिद्विशेष्यको यो निश्चयः तादृशनिश्चयस्याविषयः साध्याभावो यस्य हेतोः स किञ्चिद्विशेष्यकनिश्चयाविषयसाध्याभावकः तस्य भावः तत्त्वम्। यद्धेतुव्याप्यस्य साध्यस्यापि न क्वचिदधिकरणे निश्चयः, सहेतुः अनुपसंहारी तत्त्वं अनुपसंहारित्वमिति सरलार्थः। "सर्वमनित्यं, प्रमेयत्वात्" इत्यत्र सर्वस्य पक्षतया सन्दिग्धसाध्यकत्वेन प्रमेयत्वहेतुव्याप्यस्यानित्यत्वसाध्यस्य तदभावस्य वा न कुत्रापिनिश्चयः इति हेतोः प्रमेयत्वस्यानुपसंहारित्वमिति। स्वमतमाह वस्तुतस्त्विति पूर्वोक्तं हेतुगतं केवलान्वयित्वमेवानुपसंहारित्वमितिभावः

पद्मा

जिस हेतुक स्थलमे अन्वयव्याप्तिग्राहक दृष्टान्त एवं व्यतिरेकव्याप्तिग्राहक दृष्टान्त कोई न मिले वह हेतु कहलाताहै अनुपसंहारी। सर्वमनित्यं प्रमेयत्वात् यहाँ सभी पक्ष होनेके कारण नतो अन्वयदृष्टान्त पायाजाता औरन व्यतिरेकदृष्टान्त। क्योंकि सपक्ष होता अन्वयदृष्टान्त और विपक्ष होताहै व्यतिरेकदृष्टान्त। पक्ष नतो सपक्ष होगा और न विपक्ष। अतः प्रमेयत्व हेतु तादृशस्थलमे अनुपसंहारी है।

विरुद्धस्य किं लक्षणं

**साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्॥**

( न्या० ) विरुद्धं लक्षयति—साध्याभ वव्याप्त इति॥ साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः, साध्यव्यापकीभूताभावप्रतियोगित्वम्। तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम्।

एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः ॥ सत्प्रतिपक्षे द्वौ हेतू विरुद्ध एको हेतुरिति यावत्। साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ॥

सीता

विरुद्धस्य किं लक्षणम् इति जिज्ञासायामाह मूले साध्याभावेति । साध्याभावस्य व्याप्तिर्यत्र असौ साध्याभावव्याप्तः। पर्य्यवसितं लक्षणमाह न्यायबोधिन्यां साध्यव्यापकीभूतेति । शब्दो नित्यः कृतकत्वादित्यत्र साध्यं नित्यत्वं यत्र यत्र आत्मादौ तत्र तत्र कृतकत्वं = जन्यत्वं हेतुर्नास्तीति साध्यव्यापकोभूताभावः कृतकत्वाभावः तत्प्रतियोगित्वं कृतकत्वस्येति तस्य विरुद्धत्वम् । अत्रापि विरोधे दोषसामान्यलक्षण सङ्गमनप्रकारमादर्शयति तथाचपक्षविशेष्यकेति । साध्याभावनिरूपितव्यातिरेकव्याप्तिविशिष्टोहेतुः इतिविरोधज्ञानेन हेतुमान्पक्ष इतिज्ञानान्तरसहकृतेन साध्यानुमितिप्रतिबन्धात् अनुमितिप्रतिबन्धकज्ञानविषयत्वेन दोषलक्षणेन तत्र गतमिति लक्षणसमन्वयः । एकज्ञानविषयत्वसम्बन्धेन हेतोस्तद्वत्वात् विरुद्धत्वं दुष्टत्वम् इतिभावः ।

पद्मा

जो हेतु साध्याभावव्याप्त हो अर्थात् जहाँ जहाँ हेतु रहे वहाँ वहाँ साध्यका अभाव रहताहो तो वह हेतु कहलाताहै विरुद्ध । जैसे "शब्दो नित्यः कृतकत्वात्" यहां पर कृतकत्व अर्थात् जन्यत्व जहां जहां हैं नित्यत्व वहां कभी नहीहै, नित्यत्व स्वरूप साध्यका अभाव रहताहै । अतः कृतकत्व हेतु विरुद्ध होता है ।

सत्प्रतिपक्षस्य लक्षणं किम्

साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद्घटवत् ।

सीता

किं सत्प्रतिपक्षलणम् इतिजिज्ञासायामाह मूले—साध्याभावेति। तथाच साध्याभावसाधकहेत्वन्तरकत्वम् प्रकृतहेतोः सत्प्रतिपक्षत्वम् इत्यर्थः

सत्प्रतिपक्षदोषज्ञानमपि विरोधज्ञानवत् साध्याभावज्ञानस्य पक्षे सम्पादकं अनुमितिविरोधि भवतीति विरोधस्यापि अनुमितिविरोधिज्ञानविषयत्वं दोषत्वम्। एकज्ञानविषयत्वसम्बन्धेनच तद्वत्तया प्रकृतहेतोर्दुष्टत्वम् सत्प्रतिपक्षत्वरूपं सत्प्रतिपक्षितत्वरूपम्वेत्याह न्यायबोधिन्यां एवंसत्प्रतिपक्षेऽपीति। दूषकताबीजसाम्ये कथं तर्हि विरोधात् सत्प्रतिपक्षदोषस्य, विरूद्धाच्च सत्प्रक्षितस्य दुष्टस्य पृथङ् निर्द्देशः इतिजिज्ञासायामाह विरुद्धसत्प्रतिपक्षयोर्विशेषेति। सत्प्रतिपक्षेतु साध्यसाधकोहेतुरन्यः साध्याभावसाधकश्चान्यः इति द्वौ हेतू। विरोधस्थलेतु एकः प्रकृतो हेतुरेव साध्याभावसाधकत्वमुपैतीतिविशेषः इतिभावः।

पद्मा।

जहाँ साध्यसाधक प्रकृतहेतुसे भिन्न साध्याभावसाधकहेतु भी उपस्थितहोजाय, अर्थात् साध्यसाधक प्रकृतहेतुकपरामर्शके समान साध्याभावसाधक अन्यहेतुकपरामर्श भी हो, वहाँ प्रकृतहेतु सत्प्रतिपक्ष किंवा सत्प्रतिपक्षित होनेके कारण दुष्ट होजाता। क्योंकि जैसे तुल्यबलवाले दो मल्लोंमें कुस्ती छिड़नेपर कोईभी विजयी नहीहोता उसी प्रकार साध्यसाधक और साध्याभावसाधक दोहेतुवाले दो परामर्शोंके होनेपर कोईभी अनुमिति नही होती। प्रकृतहेतुकेकार्य्य अनुमितिके रुकजानेके कारण उसे दुष्ट मानाजाताहै। जैसे "शब्दोनित्यः श्रावणत्वात् शब्दत्ववत्" और "शब्दः अनित्यः कार्य्यत्वात् घटवत्" ये दोनों अनुमान यदि युगपत् प्राप्तहों अर्थात् "नित्यत्वव्याप्यश्रावणत्ववान् शब्दः" और अनित्यत्वव्याप्यकार्य्यत्ववान् शब्दः" ये दोनों परामर्श यदि एकदा हों, तो स्थापनानुमानका हेतु अर्थात् प्रथमानुमान का हेतु सत्प्रतिपक्ष हो जायगा। साध्यसिद्धि रुकजायगी। सत्प्रतिपक्ष शब्द दोषवाची भी है और दुष्टवाची भी। "सन् प्रतिपक्षः सत्प्रतिपक्षः" इसविग्रह और समासके अनुसार उसका अर्थ होताहै दोष। और "सन् प्रतिपक्षो यस्य" स सत्प्रतिपक्षः इसविग्रह और समासके अनुसार होताहै वह दुष्टवाची। दोष पक्षमे प्रतिपक्ष शब्दका अर्थ प्रतिबन्धकज्ञान का विषय समझना चाहिये।

कतिविधोऽद्धः ?

**असिद्धस्त्रिविधः। आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति॥**

पद्मा।

असिद्ध हेतु तीन प्रकार होतेहैं आश्रयासिद्ध स्वरूपासिद्ध और व्याप्यत्वासिद्ध। यहाँ विभागपरमूलग्रन्थसे "आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धान्यतमत्व" सामान्यतः असिद्ध हेतुका, और "आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्व" सामान्यतः असिद्धि दोषका लक्षणहै यह सूचित होताहै।

आश्रयासिद्धस्योदाहरणम्

**आश्रयासिद्धो यथा गगनारविन्दं सुरभि, अरविन्दत्वात्। सरोजारविन्दवत्। अत्र गगनारविन्दमाश्रयः स च नास्त्येव॥**

( न्या० ) आश्रयासिद्ध इति। आश्रयासिद्धिर्नाम पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः। यथेति। अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम्।

सीता

को हेतुराश्रयासिद्ध इति जिज्ञासायामाह मूले—आश्रयासिद्धोयथेति। सरोजारविन्दवत् इत्यनन्तरं "इत्यत्रारविन्दत्वहेतु" रितिशेषः तेन नायोग्यवाक्यता। न्यूनतां परिहरति न्यायबोधिन्याम् आश्रयासिद्धिर्नामेति। तथाच पक्षतावच्छेदकाभाववत्पक्षकत्वं हेतौ आश्रयासिद्धत्वम् इत्यर्थः। गगनारविन्दं सुरभि अरविन्दत्वात्" इत्यत्र अरविन्दे धर्मिणि गगनीयत्वरूपपक्षतावच्छेदकाभावेन तादृशाभाववदरविन्दनिरूपितवृत्तित्वरूपं पक्षतावच्छेदकाभाववत्पक्षकत्वं अरविन्दत्वहेतौ समायातमिति तस्याश्रयासिद्धत्वमितिभावः। दोषत्वमुपपादयति अत्रापीति।

पद्मा।

पक्षमे पक्षतावच्छेदकधर्म्म नही रहना, है आश्रयासिद्धि दोष। जिसहेतुक स्थलमे यहपरिस्थिति होती कि पक्षमे पक्षतावच्छेदक धर्म्म नही रहता है वहहेतु होताहै आश्रयासिद्ध" जैसे "गगनारविन्दं सुरभि अरविन्दत्वात्" अर्थात आकाशमें खिलनेवाला कमल सुगन्धयुक्त है क्योंकि वहभी कमलहै एतादृश स्थलमें अरविन्दत्व हेतुहै आश्रयासिद्ध" कमलमेंगगन नहींखिलता आकाशमें। फलतः गगनीयत्व स्वरूप पक्षतावच्छेदक उसमें नही है।

स्वपारूसिद्धस्योदाहरणम्—

**स्वरूपासिद्धो यथा । शब्दो गुणश्चाक्षुषत्वात्, रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥**

( न्या० ) स्वरूपासिद्ध इति । स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथाच हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् ॥

सीता

कीदृशो हेतुः स्वरूपासिद्धो भवतीतिजिज्ञासायामाह मूले—स्वरूपासिद्धोयथेति । अत्रापि "इत्यत्रचाक्षुषत्वमि"तिशेषः । अत्रापि न्यूनतां परिहरति न्यायबोधिन्यां स्वरूपासिद्धिरिति । तथाच हेतौ पक्षनिष्ठत्वाभावः स्वरूपासिद्धत्वम् । हेत्वभावविशिष्टपक्षज्ञानात् = हेत्वभाववान् पक्षः, पक्षे हेत्वभावः इत्यादिज्ञानात् । तादृशज्ञानरूपप्रतिबन्धकसद्भावात् इत्यर्थः । शब्दोगुणश्चाक्षुषत्वात् इत्यत्र चाक्षुषत्वाभाववान् शब्द इति परामर्शरूपानुमितिकरणस्य प्रतिबन्धात् प्रतिबन्धकज्ञानविषयत्वं शब्दनिष्ठचाक्षुषत्वाभावस्यास्तीति तस्य स्वरूपासिद्धित्वरूपं दोषत्वम् । एकज्ञानविषयत्वसम्बन्धेन च तस्य दोषस्य चाक्षुषत्वहेतौ सत्त्वात् तस्य स्वरूपासिद्धत्वरूपं दुष्टत्वमितिभावः ।

पद्मा ।

पक्षमें हेतुका नही रहनाही है स्वरूपासिद्धिदोष । अतः जो हेतु पक्षमें नहीरहता वह होताहै स्वरूपासिद्ध । जैसे "शब्दोगुणश्चाक्षुषत्वात्" इस अनुमानस्थलमें चाक्षुषत्वहै स्वरूपासिद्ध । क्योंकि शब्द कानसे सुना जाता आँखसे देखानही जाता ।

व्याप्यत्वासिद्धस्य किं लक्षणम् ?

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः ।**

सीता

व्याप्यत्वासिद्धस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—सोपाधिकेति । सोपाधिकत्वं व्याप्यत्वासिद्धस्य लक्षणम् । सोपाधिकत्वञ्च

स्वव्याप्यसाध्यज्ञापकत्वेनाभिमतत्व स्वनिष्ठाभावप्रतियोगिव्यापकता-निरूपितव्याप्यतावत्त्वैतदुभयसम्बन्धेन उपाधियुक्तत्वम् बोध्यम्। तथाहि धूमवान्वह्नेरित्यत्र आर्द्रेन्धनसंयोग उपाधिः निरुक्तोभय सम्बन्धेन वह्नौ हेतौ विद्यते इति तस्य व्याप्यत्वासिद्धत्वम्।

पद्मा।

जिस हेतुक स्थलमे कोई उपाधिभूत धर्म्म पाया जाय वह हेतु कहलाताहै व्याप्यत्वासिद्ध। फलितार्थ यहकि उपाधिहीहै व्याप्यत्वासिद्धि, उससे युक्तहेतु होताहै व्याप्यत्वासिद्ध। जैसे "पर्वतो धूमवान्वह्नेः" यहाँ आर्द्रेन्धनसंयोग अर्थात् कच्चे अथवा गीले काष्ठका संयोग है उपाधि और उससे युक्त होनेके कारण वही होता है सोपाधिक व्याप्यत्वासिद्ध।

**साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः। यत्र धूमस्तत्रार्द्रेन्धनसंयोगो नास्तीति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्।**

(न्या०) व्याप्यत्वासिद्ध इति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम् तदेव व्यभिचरितत्वम्। तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहतमेव अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात् घटत्वादिवत्। यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति। एवं प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपा-

धः फलम्। तथाच धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्॥

सीता

उपाधेः किं लक्षणम्? कथं च तद्युक्ततया हेतोः सोपाधिकत्वरूपं व्याप्यत्वासिद्धत्वम् इतिजिज्ञासायामाह मूले—साध्यव्यापकत्वे ति। तथाच साध्यव्यापकत्वेसति साधनाव्यापकत्वम् उपाधेर्लक्षणमित्यर्थः। किं साध्यव्यापकत्वम् इतिजिज्ञासायामाह तत्रैव साध्यसमानेत्यादि। किं साधनाव्याप्यकत्वमितिजिज्ञासायामाह तत्रैव साधवन्निष्ठेति। तथाचायं समुदितार्थः— साध्याधिकरणवृत्त्यन्ताभावाप्रतियोगित्वेसति साधनाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वम् उपाधेर्लक्षणम्। पूर्वोक्तसम्बन्धद्वयेनच तादृशोपाधिमत्त्वम् हेतोर्व्याप्यत्वासिद्धत्वम्। धूमवान्वह्नेरित्यत्र धूमाधिकरणे पर्वतादौ आर्द्रेन्धनसंयोगोनास्तीत्यभावाभावात् घटाभावं तादृशमादाय तत्प्रतियोगित्वं घटस्य, अप्रतियोगित्वं आर्द्रेन्धनसंयोगस्येति तस्य साध्यव्यापकत्वम्। साधनीभूतवह्नेरधिकरणे तप्तायःपिण्डे आर्द्रेन्धनसंयोगाभावेन तत्प्रतियोगित्वस्य आर्द्रेन्धनसंयोगे सत्त्वात् साधनाव्यापकत्वम् इति आर्द्रेन्धनसंयोग उपाधिः। निरुक्तसम्बन्धद्वयेन तादृशार्द्रेन्धनसंयोगवत्त्वं वह्निहेतोः इति तस्य व्याप्यत्वासिद्धत्वम्। तथाहि स्वं आर्द्रेन्धनसंयोगः तद्व्याप्यो धूमः तस्य ज्ञापकत्वेनाभिमतो वह्निः इति स्वव्याप्यसाध्यज्ञापकत्वेनाभिमतत्वसम्बन्धः आर्द्रेन्धनसंयोगस्य वह्नौ। एवं स्वं आर्द्रेन्धनसंयोगः तन्निष्ठोऽभावः वह्निव्यापकत्वंनास्तीत्यभावः तत्प्रतियोगिनी व्यापकता तन्निरूपितव्याप्यताऽपि वह्नौ इति प्रोक्तसम्बन्धद्वयेन वह्नेरार्द्रेन्धनसंयोगात्मकोपाधिमत्त्वं ततश्च व्याप्यत्वासिद्धत्वम्। उपाधेर्दूषकताबीजमाह न्यायबोधिन्यां प्रकृते धूमव्यापकत्वमित्यादि। यः व्यापकस्य व्यभिचारी भवति सः व्याप्यस्य व्यभिचारी भवत्येवेति नियमात् आर्द्रेन्धनसंयोगस्य व्यभिचारित्वम् धूमस्यापि। तद्व्याप्यस्य व्यभिचारीवह्निः इतिव्यभिचारज्ञानसंम्पादकतया आर्द्रेन्धनसंयोगस्योपाधेः दोषत्वम्। इतिभावः।

पद्मा

जो साध्यका व्यापक और हेतुका अव्याक होताहै वह कहलाताहै उपाधि। साध्याका व्यापक वह होताहै जिसका अभाय साध्यके अधिकरणमें नही मिलता।

साधनका अर्थात् हेतुका अव्यापक वह होताहै जिसका अभाव हेतुके अधिकरणमें पायाजाताहै। "धूमवान्वह्नेः" यहाँपर आर्द्रेन्धनसंयोग धूमका व्यापक होताहै। क्योंकि आर्द्रेन्धनसंयोगसेही धूमके होनेके कारण, धूमके अधिकरणमें उसकाअभाव नही रहता। और वह्निहेतुका वह अव्यापक इसलिए होता कि वह्निके अधिकरण तप्तायः पिण्डमें आर्द्रेन्धनसंयोगका अभाव पायाजाताहै। जब यह निश्चित होगया कि आर्द्रेन्धनसंयोग उपाधिहै तव उसकाव्यभिचारी होनेके कारण उसकाव्याप्य जो धूम उसकाभी व्यभिचारी होगा। इसतरह वह्निमें धूमका व्यभिचार निश्चय कराने के कारण आर्द्रेन्धनसंयोग उपाधिरूप दोष कहलाताहै। और उससे युक्तहोनेके कारण, वह्निहेतु व्याप्यत्वासिद्ध होताहै।

बाधितस्य किं लक्षणम् ?

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वह्निरनुष्णो द्रव्यत्वादिति। अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्॥**

(न्या०) यस्येति। यस्य हेतोः। साध्यस्याभावः साध्या भावः। स च प्रमाणान्तरेण प्रत्यक्षादिप्रमाणेन निश्चितः स बाधित इत्यर्थः। तथाच प्रात्यक्षिकसाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम्। बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते॥ इति न्यायबोधिन्यामनुमानपरिच्छेदः॥

सीता

बाधितस्य किं लक्षणम् इतिजिज्ञासायामाह मूले—यस्यसाध्येति। साध्याभाववत्पक्षत्वं पक्षनिष्ठसाध्याभावत्वं वा बाधस्य लक्षणम्। साध्याभाववत्पक्षकत्वम् बाधितस्य लक्षणम्। वह्निरनुष्णो द्रव्यत्वात् इत्यत्र वह्निरुष्णः इतिबाधनिश्चये प्रोक्तानुमितिप्रतिबन्धेन प्रतिबन्धकज्ञानविषयत्वं उष्णत्ववद्वह्नौ। इतितस्य बाधदोषता तद्वत्तयाच द्रव्यत्वस्य बाधितत्वमितिभावः। इत्युपमानपरिच्छेदः।

पाद्म

जिस अनुमानस्थलमें पक्षमें साध्यका अभाव होताहै वहाँ का हेतु बाधित कहलाताहै। फलितार्थ यहकि पक्षमेंसाध्यका न होना है बाधदोष, उसके

होनेपर वहाँ का हेतु बाधित कहलाताहै। बाधको दोष इसलिए माना जाताकि "पक्षः साध्याभाववान्" जैसे वह्नि अनुष्णत्वाभाववान्है इसप्रकार उसका निश्चय होनेपर "पक्ष साध्यवान् है" जैसे "वह्निरनुष्णः" यह अनुमिति रुकजातीहै। क्योंकि कहीं किसीभी वस्तुकी अस्तित्व-बुद्धिके प्रति वहाँ उस वस्तुका नास्तित्व निश्चय अर्थात् अभावका निश्चय प्रतिबन्धक होताहै। अतः अनुमितिप्रतिबन्धक ज्ञानका विषय होनेके कारण वह दोष कहलाताहै। अनुमानपरिच्छेदसमाप्त।

## उपमानपरिच्छेदः।

अथोपमानन्निरूपयति—

**उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः तत्करणं सादृश्यज्ञानम्। तथा हि कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते।**

(न्या०) उपमानं लक्षयति—उपमितिकरणमिति। उपमितिं लक्षयति—संज्ञासंज्ञीति। संज्ञा नाम पदम्। संज्ञी अर्थः। तयोः सम्बन्धः शक्तिः। तथाच पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः। उपमानं नामातिदेशवाक्यार्थज्ञानम्। अतिदेशवाक्यार्थस्मरणं व्यापारः। उपमितिः फलम्। गोसदृशो गवयपदवाच्य इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम्। इति न्यायबोधिन्यामुपमानपरिच्छेदः।

सीता

अवगतं प्रत्यक्षानुमानं च प्रमाणम् उपमानस्य प्रमाणस्येदानीं किं लक्षणम्? इतिजिज्ञासायामाह मूले—उपमितीति। उपमितिकरणत्वम् उपमानप्रमाणस्य लक्षणमित्यर्थः। उपमितेरेव तर्हि किं लक्षणम् इतिजिज्ञासायामाह मूले—संज्ञासञ्ज्ञीति। किं तस्याः करणमितिजिज्ञासायामाह—तत्करणं सादृश्येति। प्रक्रियामुपपादयति तत्रैव-तथाहीति। तथाचायं मूलस्य सारार्थः। प्रथमं कस्यचित् गवयज्ञस्य मुखात् शृणोति

"गोसदृशो गवयो भवती"ति । ततः कदाचित् चक्षुर्गोचरतां गते गोसदृशे प्राणिनि "अयंगोसदृशः" इतिज्ञानं भवति । तदनन्तरं "अयंगवयपदवाच्यः" अर्थात् "एतज्जातीयाः पशवो गवयपदवाच्याः" इतिज्ञानत्रयं भवति । तत्र चरमज्ञानमुपमितिः फलम् । द्वितीयं मध्यवर्तिगोसादृश्यप्रत्यक्षम् फलायोगव्यवच्छिन्नकारणतया अनुमितिं प्रति परामर्श इव करणम् ततएवचोपमानमिति । न्यायबोधिनीकारस्तु— संज्ञानामेत्यादिना संज्ञासंज्ञिसम्बन्धपदार्थनिर्वचनपूर्वकमुपमितिं निरुच्य मूलस्य प्रतिवादमाह-उपमानंनामेति । अयंभावः एतन्मते व्यापारवतः कारणस्य करणतया न सादृश्यप्रत्यक्षस्य करणता । अपितु प्राथमिको "गोसदृशोगवयोभवतीतिवाक्यार्थबोधः करणम् । पिण्डमवलोकयतः तादृशवाक्यार्थस्मरणं व्यापारः । फले त्ववैमत्यम् इति । इत्युपमानपरिच्छेदः ।

पद्मा

जो उपमिति नामक प्रमाज्ञानके प्रति करणहो वहीहै उपमान । नाम और नामी अर्थात् नामवाली वस्तु का जो शक्तिनामक सम्बन्ध, उसका ज्ञानहै उपमिति। उस उपमितिके प्रति करणहै उपमेयमें उपमानका सादृश्यदर्शन । प्रक्रिया यहहै-कोई गवयपशुका ज्ञाता व्यक्ति किसी गवयज्ञ व्यक्तिसे "गवयशु गैऐकेसमान होताहै" इसप्रकार सुनकर कभी गैएके समान पशुको देखताहै । अनन्तर "यही-पशु गवयहै" एसा ज्ञान उसे होताहै । यह अन्तिम ज्ञानहै उपमिति । यहाँ अन्नंभट्टके मतमें "यह पशु गैएके समानहै" इसप्रकार होनेवाला गोसदृश्यका चाक्षुष-प्रत्यक्ष है उपमान । और न्यायबोधिनीकारके मतमें "गवय गैएके समान होताहै" इप्रकार होनेवाला शाब्दबोधहै उपमान । उपमानपरिच्छेदसमाप्त ।

## शब्दपरिच्छेदः ।

अथ शब्दादीनां लक्षणं निरूप्यते—

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा गामानयेति । शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ॥**

(न्या०) शब्दं लक्षयति—आप्तेति । आप्तोच्चरितत्वे सति

वाक्यत्वं शब्दस्य लक्षणम्। प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत आप्तोच्चरितत्वनिवेशः। तावन्मात्रोक्तौ जबगडदशादावतिव्याप्तिरतो वाक्यत्वम्। आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्। तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः। वस्तुतस्तु। पदज्ञानं करणम्। वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः। वाक्यार्थज्ञानं शाब्दबोधः फलम्। वृत्तिर्नाम शक्तिलक्षणान्यतररूपा। शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः। ईश्वरसंकेतो नाम ईश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदे शक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वं शक्यत्वम्। शक्यसम्बन्धो लक्षणा। सा द्विविधा गौणी शुद्धा चेति। गौणी नाम सादृश्यविशिष्टे लक्षणा यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा। शुद्धा द्विविधा। जहल्लक्षणा अजहल्लक्षणा चेति लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा। यथा गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद् गङ्गापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकं दध्युपघातकत्वम्। तेन रूपेण दध्युपघातकानां सर्वेषां काकबिडालकुक्कुटसारमेयादीनां शक्यलक्ष्याणां सर्वेषां बोधात् जहदजहल्लक्षणा वेदान्तिनां मते। [ सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका यथा तत्त्वमसीत्यत्र सर्वज्ञत्वकिंचिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात् ]

सीता

शब्दप्रमाणस्य किं लक्षणं इतिजिज्ञासायामाह मूले—आप्तेत्यादि। तथाच यथार्थवक्तृप्रयुक्तवाक्यत्वं शब्दप्रमाणस्य लक्षणमितिमूलार्थः। अत्र वाक्यत्वमात्रोक्तौ भ्रान्तोच्चरितवाक्येतिव्याप्तिः। तदनुक्तौच महेशोक्तजवगड्दशादावतिव्याप्तिः। न्यायबोधिन्यां पर्य्यवसितार्थमाह-प्रयोगहेत्विति। प्रयोगस्य = वाक्योच्चारणस्य हेतुभूतं यत् यथार्थज्ञानम् तज्जन्यत्वेसति शब्दत्वमितितदर्थः। अत्रापि शब्दत्वमत्रोक्तौ जवगड्दशादौ अतिव्याप्तिः। प्रयोगपदं वाक्यप्रयोगपरम् शब्दपदमेव वा

वाक्यपरं बोध्यम् । अन्यथा जवगड्दशादावतिव्याप्ति र्दुवारैव स्यादिति । नवीनमतमाह—न्यायबोधिन्यां वस्तुतस्त्विति । अयंभावः वाक्यस्य शाब्दबोधकरणतया शब्दप्रमाणत्वे चक्षुरादिना शब्दबोधो नस्यात् शब्दाभावात् । शब्दज्ञानस्य करणत्वेतु तत्रापि स्मरणात्मकपदज्ञानसत्त्वेन नस्यादनुपपत्तिरिति । उभयमतसिद्धं व्यापारं फलं चाह वृत्तिज्ञानेत्यादि । शक्तिस्वरूपवृत्तिं विशदयति शक्तिर्नामेति । घटादिविशेष्यो यत्र असौ घटादिविशेष्यकः एवं घटादिपदजन्यो यो बोधः तादृशबोधविषयत्वं प्रकारो यत्रासौ घटादिपदजन्यबोधविषयत्वप्रकारकः । "घटो घटपदजन्यबोधविषयतावान् भवतु" इत्याकारिका भगवदिच्छा इच्छावा शक्तिरिति सरलार्थः । पदनिरूपिता वाच्यतारूपाशक्तिः अर्थे तिष्ठतीति पदस्य शक्तिनिरूपकत्वं शक्तत्वम् । विशेष्यतया तादृशेच्छात्मकशक्त्याश्रयत्वं वाच्यत्वम् शक्यत्वमित्यर्थः । लक्षणा का ? इतिजिज्ञासायामाह—शक्यसम्बन्धो इति । वाच्यार्थसम्बन्धत्वं लक्षणायाः लक्षणमित्यर्थः । अत्रायं न्यायबोधिनीसारार्थः वाच्यार्थप्रतियोगिकसादृश्यसम्बन्धत्वम् गौणीलक्षणायाः लक्षणम् । लक्ष्यतावच्छेदकावच्छिन्नमात्रबोधकशक्यसम्बन्धत्वम् जहल्लक्षणायाः लक्षणम् । लक्ष्यतावच्छेदकावच्छिन्नलक्ष्यशक्योभयबोधकशक्यसम्बन्धत्वम् अजहल्लक्षणायाः लक्षणम् । शक्यतावच्छेदकाविषयक शक्यविषयकबोधजनकशक्यसम्बन्धत्वम् जहदजहल्लक्षणायाः लक्षणम् । "सिंहो माणवक" इत्यत्र सिंहसादृश्यस्वरूपसम्बन्ध माणवके ओजस्विनि विद्यते इतितादृशसादृयसम्बन्धरूपगौणीलक्षणाज्ञानाद् भवति शाब्दबोधः । "काकेभ्योदधिरक्ष्यताम्" इत्यत्र काकपदेन दध्युपघातकतया काकाकाकविड़ालादीनां बोधात् काकस्याप्यपरित्यागेन अजहल्लक्षणाज्ञानाद्भवतिबोधः । जहदजहल्लक्षणा तु न स्वमतसिद्धा । वेदान्तिनांमते तत्त्वमसीति" महावाक्यात् तत्त्वंपदशक्यतावच्छेदकीभूते सर्वज्ञत्वाल्पज्ञत्वे विहायात्मनोरभेदबोधोपगमाद्भवति तदभ्युपगमः । न्यायमते तु तत्त्वमसीत्यस्य तस्य परमेश्वरस्य त्वं असीत्यर्थः अतो न तदपेक्षेति ।

पद्य

आप्तव्यक्तिका वाक्यहै शब्दप्रमाण । जो सत्यबोले वहीहै आप्त । अनेक पदों का नामहै वाक्य । जैसे "गामानय" गैएको लेआओ यह है वाक्य ।

जिसशब्दकी किसी वस्तुमे शक्तिहो अर्थात् किसी वस्तुको समझासके उसका नामहै पद। "इस पदसे यह वस्तु समझी जाय" इस प्रकार भगवान् की इच्छाही है शक्ति। न्यायबोधिनीकार कहतेहैं कि आप्तवाक्य शब्द प्रमाण नही किन्तु आप्तवाक्यका ज्ञानहै शाब्दबोधमें करण। क्योंकि चेष्टासे भी शाब्दबोध होताहै। अतः वाक्यज्ञान को शब्दप्रमाण समझना चाहिये। और शब्दके प्रति कारण होने वाली पदार्थोपस्थिति, जैसे शक्तिज्ञानसे होतीहै, उसीप्रकार लक्षणाज्ञान से भी होतीहै अतः लक्षणाभी एक स्वतन्त्र वृत्ति अर्थात् शब्दबोधजनक पदार्थोपस्थापक सम्बन्ध है। वह पहले दो प्रकारहै शुद्धा और गौणी। शुद्धाके फिर दो प्रकारहैं जहल्लक्षणा और अजहल्लक्षणा। वेदान्तिओंके मतमे जहदजहल्लक्षणा भी एक है। गङ्गातटमे गैया चरतीहै इसअर्थमें यदि "गङ्गामे गैया चरतीहै" इसप्रकार वाक्य प्रयोग कियाजाय तो वहाँ तटअर्थमे गङ्गापद की जहल्लक्षणाहै। क्योंकि गङ्गाशब्दका अर्थहै विलक्षण जलप्रवाह। यदि काग बिल्ली कुत्ते सभीसे दहीको बचाओ इस अभिप्रायसे "काक से दही बचाओ" इस प्रकार वाक्य-प्रयोग किया जाय तो 'काक' पद को अजहल्लक्षणा सारे दध्युपघातक जन्तु अर्थ में होगी।

वाक्यार्थज्ञाने को हेतुः?

## आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः।

पद्मा

आकांक्षा योग्यता सन्निधि ये वाक्यार्थज्ञान अर्थात् शाब्दबोधके प्रति कारणहैं। मूलोक्त आकांक्षा योग्यता सन्निधिपदसे इनका ज्ञान लेना। अर्थात् आकांक्षाज्ञान योग्यताज्ञान और सन्निधिज्ञान ये शाब्दबोधके प्रति कारणहैं।

आकांक्षायोग्यतासन्निधीनां कानि लक्षणानि?

पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा। अर्थाबाधोयोग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकांक्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम् आकांक्षाविरहात्। वह्निना सिञ्चेदिति न प्रमाणंयोग्यतावि-

**रहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सान्निध्याभावात्।**

( न्या० ) आकाङ्क्षां लक्षयति—पदस्येति अव्यवहितोत्तरत्वादि-सम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभाव स्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा। यथा घटमित्यादि-स्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेनाम्पदं घटपदवदित्याकारकाम्पद-विशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते। अम् घट इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते। अतस्तादृशाकांक्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो योग्यतेत्यर्थः। अग्निना सिञ्चेदित्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। सन्निधिं निरूपयति—पदानामिति। असहोच्चारितानि विलम्बोच्चारितानि।

सीता

आकांक्षायोग्यतासन्निधीनाम् कानि लक्षणानि? कथं च तासां कारणत्वमित्याकांक्षायामाह मूले—पदस्येत्यादि। अत्रायं न्यायबोधिन्याः सारांशः "घटम्" इतिवाक्योच्चारणे घटनिष्ठकर्मतायाः बोधो-भवति "अमघटः" इत्युच्चारणे बोधो न भवति अतः अव्यवहितोत्तर-त्वसम्बन्धेन अमादिपदे घटादिपदवत्त्वरुपायाः आकांक्षाया ज्ञानं कारणं वाच्यम्। एवं अग्निना सिञ्चतीति वाक्यात् अग्निकरणकसेच-नबोधो न भवति "जलेनसिञ्चतीति वाक्यात्तु जलकरणकसेचनबोधो भवतीति विशेष्य पदार्थे विशेषणपदार्थसम्बन्धबाधाभावरुपायाः योग्यतायाः ज्ञानं कारणं वाच्यम्। उक्तौच सेचने वन्हिकरणकत्वस्य-चाबाधेन जलेनसिञ्चतीतिवाक्यात् बोधः नाग्निनासिञ्चतीत्यनेन। सहोच्चारिताभ्यां गां आनयेति सुबन्ततिङन्ताभ्यां शाब्दबोधोभवति नासहोच्चारिताभ्यामिति अव्यवधानेन श्रूयमाणत्वरूपायाः सन्निधे र्ज्ञानं शाब्दबोधकारणं वाच्यमिति।

पद्मा

जिन पदोंको यादृश पूर्वपरीभाव न होनेके कारण शाब्दबोध नहो उन पदोंका तादृश पूर्वापरीभावहै आकांक्षा। अर्थबाधका अभाव अर्थात् विशेष्यविशे-

पणसंसर्गबाधका अभाव है योग्यता । पदोच्चारणगत अविलम्बहै सन्निधि । पर्य्यवसित यह होता कि इनके अर्थात् इनकेज्ञानोके अभाव होनेपर वाक्यार्थ बोध नही होता, अतः तादृश स्थलीय वाक्य प्रमाण नही । गो अश्व, मनुष्य, हाथी" इसप्रकारका वाक्य इसलिए प्रमाण नही कि यहाँ परस्परमे कोई अ.कांक्षा नहींहै । "आगसे सींचताहै" इसप्रकार वाक्य इसलिए प्रमाण नहीहै कि योग्यता नहीहै । पहर पहर बाद उच्चारित "गैया, लाओ" यह वाक्य प्रमाण नही । क्योंकि वहाँ सन्निधि नही ।

वाक्यभेदः प्रदर्श्यते—

**वाक्यं द्विविधम् । वैदिकं लौकिकं च । वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम् ।**

( न्या० ) वैदिकमिति । वेदवाक्यमित्यर्थः ॥ इदमुपलक्षणम् । वेदमूलस्मृत्यादीन्यपि ग्राह्याणि । लौकिकं त्विति । वेदवाक्यभिन्नमित्यर्थः । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । इति न्यायबोधिन्यां शब्दपरिच्छेदः ।

पद्मा

वाक्य दो प्रकारहैं वैदिक और लौकिक । वैदिक वाक्य सारे हैं प्रमाण । क्योंकि वे भगवानके कहे हुये हैं । लौकिक वाक्य दो प्रकार हैं आप्तोक्त और अनाप्तोक्त । उसमें आप्तोक हैं प्रमाण और अन्य हैं अप्रमाण । वेद एवं तन्मूलक स्मृति इतिहास पुराण आदि के वाक्य हैं वैदिक वाक्य । तदन्य वाक्य हैं लौकिक वाक्य । समझकर सत्यबोलने वाले होते हैं आप्त ।

शाब्दज्ञानं निरूप्यते--

**वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ॥**

सीता

वाक्यार्थज्ञाने हेतुरित्युक्तं तत्र वाक्यार्थज्ञानम् किमिति जिज्ञासायामाह—वाक्येति । शाब्दज्ञानत्वं वाक्यार्थज्ञानस्य लक्षणमित्यर्थः तत्करणत्वमेवहि च शब्दप्रमाणत्वमित्यर्थः । इतिशब्दपरिच्छेदः ।

पद्मा

शाब्दबोधका ही अपरनाम है वाक्यार्थबोध। उसीके प्रति करण होनेवाले आप्तवाक्य होते हैं शब्द प्रमाण। यहां यह ध्यान रखना चाहिये कि न्यायबोधिनीकारके मतमें शब्द करण नहीं है किन्तु उसका ज्ञान। शब्दपरिच्छेद समाप्त।

अयथार्थानुभवः कतिविधः ?

**अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात्।**

पद्मा

यथार्थानुभव प्रत्यक्ष अनुमिति उपमिति और शाब्दबोध चार प्रकार हैं यह बात पहले कही जाचुकी है। अयथार्थानुभव तीन प्रकार होते हैं। जैसे संशय विपर्यय और तर्क।

संशयस्य किं लक्षणम् ?

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि-ज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति।**

(न्या०) यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते—संशयेत्यादिना। एकेति। एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकज्ञानं संशय इत्यर्थः। भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्वेत्यत्र च स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव।

सोता

संशयस्य किं लक्षणं इतिजिज्ञासायामाहमूले—एकस्मिन्निति। परिष्करोति न्यायबोधिन्यां—एकधर्मेति। एकेन धर्मेणावच्छिन्ना या विशेष्यता तन्निरूपिता या भावाभावप्रकारता तच्छालिज्ञानत्वं संशयस्य लक्षणमित्यर्थः। कोटिक एव इत्यनन्तरं संशय इतिशेषः।

पद्मा

किसी एक अधिकरणमें विरुद्ध अनेकधर्मसम्बन्धका ज्ञान है संशय। जैसे यह स्थाणु है या मनुष्य ? यहज्ञान संशय है। क्योंकि यहाँ एक वस्तुमें स्थाणुत्व और मनुष्यत्व दो विरुद्ध धर्म विशेषण होतेहैं। यहाँ न्यायबोधिनीकार का कहना यहहै कि ज्ञान केवल विरुद्ध अनेकविशेषणक होने सेही संशय नहीहोता किन्तु उन विशेषणीभूत अनेक धर्मोंको भाव और अभाव स्वरूप होना आवश्यकहै। "यह स्थाणु है या मनुष्य" इसस्थलमें दो संशय समझना

चाहिये जैसे "यह स्थाणु है या नही" "यह मनुष्य है या नही" एतदनुसार वे लक्षणका आकारभी बतलातेहैं कि एकधर्म्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारताकज्ञानत्व संशयका लक्षणहै ।

विपर्ययस्य किं लक्षणम् ?

**मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ 'रजतम्' इति ।**

( न्या० ) मिथ्याज्ञानमिति । अयथार्थज्ञानमित्यर्थः । विपर्ययो नाम भ्रमः ।

पद्मा

जो जहाँ नहीहै वहां उसे समझना है मिथ्याज्ञान अयथार्थज्ञान, यह बात पहले बतलायी जाचुकीहै उसीका अपर एक नाम विपर्य्यय भी है । जैसे सीपको "यह चांदी है" एसा समझना । इसेही भ्रम अप्रमा भी कहतेहैं ।

तर्कलक्षणं निरूप्यते—

**व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ।**

( न्या० ) व्याप्यारोपेणेति । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम् । अन्यथा बाधनिश्चयाभाव इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।

सीता

तर्कस्य किं लक्षणमितिजिज्ञासायामाह—व्याप्यारोपेणेति । व्याप्यारोपप्रयोज्य-व्यापकारोपत्वं तर्कस्य लक्षणमितिमूलार्थः ज्ञानत्वं परित्यज्याहार्य्यज्ञानत्वरूपस्यारोपत्वस्य कुतो लक्षणे प्रवेश इतिजिज्ञासायामाहन्यायबोधिन्याम्—तर्के व्याप्यास्येत्यादि । सति बाधनिश्चये च ज्ञानमारोपात्मकमेव भविष्यति ।

पद्मा

व्याप्यके आपादनसे व्यापकका आपादन का नामहै तर्क । जैसे यदि पर्वतमें आग न होती तो धूमभी नहोता, यदि पर्वतमें आग न होगी तो धूमभी न होगा इत्यादि ।

कतिविधा स्मृतिः ?

**स्मृतिरपि द्विविधा। यथार्था अयथार्था च। प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था।**

पद्मा

स्मृतिकेभी दो प्रकार हैं यथार्थस्मृति और अयथार्थस्मृति। यथार्थ अनुभवसे होने वाली स्मृतिहै यथार्थस्मृति, और अयथार्थनुभवसे होनेवाली स्मृतिहै अयथार्थस्मृति।

सुखं निरूपयति—

**सर्वेषामनुकूलवेदनीयं सुखम्।**

(न्या०) सुखं निरूपयति—सर्वेषामिति। इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः। यथा श्रुते 'घटोऽनुकूल' इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति निष्कृष्टलक्षणमुक्तम्। भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छाविशेषणम्। सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात्।

सीता

सुखस्य किं लक्षणम् इतिजिज्ञासायामाहमूले—सर्वेषामिति। अनुकूलत्वप्रकारकज्ञानविशेष्यत्वम् सुखस्य लक्षणमितिमूलार्थः। परन्तु "घटोऽनुकूलः" इतिज्ञानमादाय घटेऽतिव्याप्तिः अतः न्यायबोधिन्यां सुखस्य लक्षणमाह—इतरेच्छेत्यादि। इतरस्य या इच्छा तदनधीना=तदजन्या या इच्छा तद्विषयत्वम् सुखस्य लक्षणम इतितदर्थः। अयंभावः फलमिच्छत एव जनस्य तदुपायविषये इच्छा दर्शनात् सुखस्येच्छया हि तदुपायभूते घटादाविच्छा भविष्यतीति घटादेः सुखेच्छाधीनेच्छाविषयत्वसत्त्वेन इतरेच्छानधीनेच्छाविषयत्वाभावेन न घटादावतिव्याप्तिः। सुखेच्छा तु नान्येच्छाधीना सुखस्य चरमफलत्वात् कस्यचिदुपायत्वाभावेन इतरेच्छानधीनायाः "सुखं मेजायतामितीच्छायाः विषयत्वेन तल्लक्षणसमन्वय इति। वस्तुतस्तु घटादौ नातिव्याप्तिः अनुकूलवेदनीयत्वस्य तत्र सत्वेऽपि सर्वेषां

प्राणिनामनुकूलवेदनीयत्वस्य तत्राभावात् अपि त्वसम्भवः सुखेमुमुक्षूणामनुकूलवेदनीयत्वाभावात्। मोक्षस्य दुखाभावरूपत्वात् अतः इतरेच्छेत्यादिलक्षणं वाच्यम् । यदिच तथापि दुःखभावेऽतिव्याप्तिरितिविभाव्यते तदा सुखत्वजातिरेव सुखलक्षणम् इतिमन्तव्यम् ।

पद्मा

जिसे सभी प्राणी चाहे वही है सुख सुख छोड़कर और जितने पदार्थ हैं उन्हें सभी प्राणी नही चाहते । सुख आकीटपतङ्ग चाहताहै । यदि यह कहाजाय कि दुःखाभाव को भी सभी प्राणी चाहते हैं किन्तु वह सुख नहींहै, तो यह कहना कि जिसभाव वस्तुको सभी प्राणी चाहे वह है सुख । दुखाभाव अभाव है भाव नही ।

दुःखं निरूपयति –

## प्रतिकूलवेदनीयं दुःखम् ।

( न्या० ) दुःखं निरूपयति—प्रतिकूलेति । अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेतिद्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः। फलेच्छा उपायेच्छाम्प्रति कारणम्। अतः फलेच्छावशादुपायेच्छा भवति एवं फले द्वेषादुपाये द्वेषः ।

सीता

दुःखस्य किं लक्षणमितिजिज्ञासायामाह मूले—प्रतिकूलेति । अत्राऽपि सर्वेषामितियोजनीयम् । तथाच सर्वेषां प्रतिकूलवेदनीयत्वप्रकारकज्ञानविशेष्यत्वम् दुःखस्य लक्षणम् । अत्रापि दुःखोपायेऽतिव्याप्तिमाशंक्याह न्यायबोधिन्यां—अत्रापीतरेति । इतरस्मिन् यः द्वेषः तदनधीनःयो द्वेषः तद्विषयत्वमित्यर्थः । फलद्वेषस्योपायद्वेषकारणतया न सर्पादावतिव्याप्तिः तत्र द्वेषस्य मरणदुःखद्वेषाधीनत्वादितिभावः। वस्तुतस्तु सर्वेषामितियोजनया यथाश्रुतमेव सम्यक् । दुःखत्वजातिरेव वा तल्लक्षणम् ।

पद्मा

जिसे कोई न चाहे वहीहै दुःख। आकीटपतङ्ग कोईभी प्राणी दुःख नही चहता। सर्प आदि मरण दुःखकेसाधन भी प्रतिकूलवेदनीय अर्थात् अवाञ्छनीयहै किन्तु सब प्राणीके लिये अवाञ्छनीय नही। अतिदुःखी व्यक्ति मरणकोभी चाहता है किन्तु दुःख कोई नही चाहता।

इच्छाद्वेषप्रयत्नानां लक्षणानि—

## इच्छा कामः। क्रोधो द्वेषः। कृतिः प्रयत्नः।

सीता

इच्छाद्वेषप्रयत्नानां कानि लक्षणानि इतिजिज्ञासायामाहमूले—इच्छाकाम इत्यादि। प्रयत्नजनकगुणत्वं कामत्वरूपमिच्छात्वमेव वा इच्छयाः लक्षणम्। निवृत्तिजनकगुणत्वं क्रोधत्वरूपं द्वेषत्वमेव वा द्वेषस्य लक्षणम्। चेष्टाजनकगुणत्वम् कृतित्वजातिरेव वा प्रयत्नस्य लक्षणमितिभावः।

पद्मा

जिसके होनेपर प्राणी किसी वस्तुकेलिए प्रयत्नकरताहै वहीहै इच्छा। उसीका अपरनाम कामभी है। जिसके होनेपर प्राणी किसीकार्य्यसे निवृत्तहो वह है द्वेष। क्रोधभी एक प्रकार द्वेषहीहै। यद्यपि क्रोधस्थलमें भी उसके उपघातके लिये प्रवृत्ति देखी जातीहै तथापि क्रोध प्रवृत्तिके प्रति कारण नही किन्तु क्रोध प्रयुक्त निवृत्ति की रक्षाकेलिये इच्छा प्रयत्न होकरके ही उपघातानुमूल चेष्टा होतीहै यह रहस्यहै। चेष्टा के प्रति कारणीभूत गुणहै प्रयत्न। जिसका नाम कृति भीहै।

धर्मस्य किं लक्षणम्?

## विहितकर्मजन्यो धर्मः। निषिद्धकर्मजन्यस्त्वधर्मः।

(न्या०) धर्माधर्मौ निरूपयति—विहितेति। वेदविहितेत्यर्थः। निषिद्धेति। वेदनिषिद्धेत्यर्थः।

पद्मा

शास्त्रोपदिष्ट याग दान पूजन आदि क्रियाजन्य गुण है धर्म्म। शास्त्रनिषिद्ध क्रियाजन्य गुण का नामहै अधर्म्म। विहितकर्म्मजन्यगुणत्व धर्म्मका और निषिद्धकर्म्मजन्यगुणत्व अधर्म्मका लक्षण समझना।

आत्ममात्रविशेषगुणाः के ?

**बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।**

( न्या० ) बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ।

पद्मा

बुद्धि सुख दुःख इच्छा द्वेष प्रयत्न धर्म अधर्म्म ये आठ केवल आत्मामे रहने वाले गुणहैं । इनके अन्दर ज्ञान इच्छा और प्रयत्न ये नित्य तथा अनित्य दो प्रकार होवेहैं । नित्य परमेश्वरमें। और अनित्य वे जीवात्मामें रहतेहैं ।

संस्कारः कतिविधः, तद्भेदाश्च के ?

**संस्कारस्त्रिविधः । वेगो भावना स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्यास्मृतिहेतुर्भावना आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिविवृत्तिः । इति गुणाः ।**

( न्या ) संस्कारं विभजते—संस्कार इति । भावनां लक्षयति—अनुभवेति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनः—संयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः। ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात् । अतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः । ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा । यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानस्य । दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः । सा

च दण्डी पुरुष इत्याकारिका। नहि दण्डमजानानः 'दण्डी पुरुषः' इति प्रत्येति। एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डी पुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः। तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च, स्मृतिं प्रत्यनुभवस्य कारणत्वादिति चेत्? अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यत्वम् दण्डज्ञानकारणतायां न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः। अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति स्मरणसाधारणदण्डज्ञानत्वेनैवद ण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्त्तते। तथाहि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानु, भवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्। अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य भावनायां सत्त्वात्। नचैवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्। तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम्। नहि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथाहि—ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहादिति चेत्? न—स्मृतावतिव्याप्तिवारणायैव तदुपादानात्। तथाहि—स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन। इत्थं चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिः। उक्तविशेषणदाने तु स्मृतेः स्मृतिहेतुत्वाभावात्तद्व्युदासः।

सीता

संस्कारः कतिविधः इतिजिज्ञासायामाह—संस्कारेति। वेगभाव-

नास्थितिस्थापकान्यतमत्वं संस्कारसामान्यलक्षणं बोध्यम् । पृथिव्यप्तेजोवायुमनोवृत्ते र्वेगस्य लक्षणंतु द्वितीयादिपतनासमवायिकारणत्वम् बोध्यम् । भावनालक्षणमाह--अनुभवजन्येति । तथाचानुभवजन्यत्वेसति स्मृतिहेतुत्वम् भावनायाः लक्षणम् । अत्र स्मृतिहेतुत्वानुक्तौ अनुभवध्वंसे ऽतिव्याप्तिः । तन्मात्रोक्तौ तु अनुभवे ऽतिव्याप्तिः अतः उभयोपादानम् अनुभवत्वावच्छिन्नकारणतानिरूपितकार्य्यताशालित्वेसति स्मृतित्वावच्छिन्नकार्य्यतानिरूपितकारणताशालित्वं भावनायाः पर्य्यवसितं लक्षणम् । यथाश्रुतमात्रस्य लक्षणत्वे विशिष्टस्मृतिजनके विशेषणज्ञानात्मकानुभवजन्ये विशिष्टानुभवे ऽतिव्याप्त्यापत्तिः दण्डीपुरुषइतिविशिष्टानुभवे तत्पश्चाद्भावि "दण्डीपुरुष" इतिविशिष्टस्मृतिजनकत्वस्य "दण्डः" इतिविशेषणज्ञानात्मकानुभवजन्यत्वस्य सत्त्वात् । उक्तपरिष्कारे तु नातिव्याप्तिः विशिष्टानुभवे विशेषणज्ञानत्वावच्छिन्नकारणतानिरूपितकार्य्यतायाः सत्वेन अनुभवत्वावच्छिन्नकारणतानिरूपितकार्य्यतायाः अभावात् । स्मृतिहेतुत्व दलं तर्हि स्मृतावतिव्याप्तिवारणाय देयम् अनुभवजन्यत्वस्य तत्रसत्त्वात् । तदुक्तौ तु नातिव्याप्तिः स्मृतौ स्मृतिहेतुत्वाभावात् इतिन्यायबोधिनीसारार्थः । वेगभावनाभिन्नसंस्कारत्वं स्थितिस्थापकलक्षणं बोध्यम् ।

## पद्मा

संस्कार तीन प्रकार हैं वेग भावना और स्थितिस्थापक । अतः "वेगभावना स्थितिस्थापकान्यतमत्व" संस्कारका लक्षण समझना । वेग पृथिवी जल तेज वायु और मन में रहता है । भावना आत्मा में रहती है । भावना उसे कहते हैं जो गुण अनुभव से उत्पन्न होता हो और स्मृति को पैदा करता हो । अनेक पूर्व अनुभूत पदार्थों के स्मरणार्थ ही भावना मानी जाती है । बाँस पेड़ों की डाल आदि को नत करके छोड़ने पर फिर पूर्व स्थान तक पहुंचाने वाले संस्कार का नाम है स्थितिस्थापक । न्यायबोधिनीकार कहते हैं कि "अनुभव जन्यत्व" का अर्थ अनुभवत्वावच्छिन्नकारणतानिरूपितकार्य्यताशालित्व समझना चाहिये अन्यथा जहाँ पहले "दण्डः" यह विशेषण का ज्ञान हुआ अनन्तर "दण्डीपुरुषः" यह विशिष्टानुभव हुआ पश्चात् कभी दण्डीपुरुषः एसा स्मरण हुआ तादृशस्थल में मध्यस्थ "दण्डीपुरुषः" इस विशिष्टानुभव में अतिव्याप्ति होगी । क्योंकि वह "दण्डः" इस विशेषणज्ञान स्वरूप अनुभव से जन्य भी है

और परवर्त्ती "दण्डीपुरुषः" इस स्मरण के प्रति कारण भी है। परिष्कार करनेपर दोष इसलिए नहीं होता कि उसमें विशेषणज्ञानत्वावच्छिन्नकारणता निरूपित कार्य्यता है अनुभवत्वावच्छिन्नकारणतानिरूपितकार्य्यता नहीं।

कर्मणः किं लक्षणम् ?

**चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम्। विप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्।**

सीता

कर्म्मसामान्यस्य तद्विशेषस्य च किंलक्षणम् इतिजिज्ञासायामाह मूले—चलनात्मकेति। तथाच चलनत्वम् कर्म्मसामान्यस्य लक्षणम् ऊर्ध्वदेशसंयोगहेतुत्वं उत्क्षेपणस्य, अधोदेशसंयोगहेतुत्वम् अपक्षेपणस्य अनारम्भकावयवपरस्परसंयोगहेतुत्वम् आकुञ्चनस्य तादृशसंयोगविरोधिविभागहेतुक्रियात्वम् प्रसारणस्य लक्षणम् बोध्यम्। तावतिरिक्तकर्म्मत्वं च गमनस्य लक्षणं बोध्यम्।

पद्मा

चलन कम्पन स्पन्दन इन्हीं का नाम है कर्म्म। ये पाँच प्रकार हैं यहबात पहले बतायी जाचुकी है। जिस क्रिया से किसी भी वस्तु को उर्द्धदेश से संयोग हो वहहै उत्क्षेपण, जिस क्रियासे नीचे देशके साथ सयोगहो वहहै अपक्षेपण। जिसक्रियासे एक अवयवीके अवयवोंमें अनारम्भक परस्पर संयोग उत्पन्न हो उसका नामहै आकुञ्चन। और तादृश संयोगके विरोधी विभागका जनक कर्म्महै प्रसारण, अन्य सारी क्रियायेंहैं गमन।

सामान्यस्य किं लक्षणम् ?

**नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। परं सत्ता। अपरं द्रव्यत्वादि।**

(न्या:) सामान्यं निरूपयति—नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। नित्यत्वविशेषणानुपादानेऽनेक-

समवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्ति स्तद्वारणायसमवेतत्वमुक्तम् । अनेकत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्व रिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः। जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वविशेषणम्।

सीता

सामान्यस्य किं लक्षणमितिजिज्ञासायामाह मूले—नित्येति। नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणमिति पूर्वमप्युक्तं तदेवन्यायबोधिन्यामाह—नित्यत्वेसतीत्यादि । अनेकद्रव्यसमवेतसंयोगविभागादावतिव्याप्तिः स्यात् यदि नित्यत्वं नोक्तंस्यात्। तन्मात्रोक्तौच आकाशादिषु स्यादतिव्याप्तिः, अतः अनेकसमवेतेत्याद्युक्तिः। तत्रापि समवेतत्वमात्रोपादाने आकाशादिगतसंख्यादावतिव्याप्तिः। अनेकवृत्तित्वोक्तौ अत्यन्ताभावेऽतिव्याप्तिः इति लक्षणे तत्तत्पदक्षेपः।

पद्मा

जो नित्य होताहुआ अनेक धर्म्मीमे समवाय सम्बन्धसे रहताहै वहहै सामान्य। इस सम्बन्धमे पूर्व लिखितबातों को ध्यानमे रखना चाहिये। सामान्य द्रव्य गुण और कर्म्ममे रहता है। सत्ताहै परजाति और द्रव्यत्व आदि अपर।

विशेषस्य किं लक्षणम् ?

## नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥

(न्या०) नित्यद्रव्यवृत्तय इति। नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अत एव। व्यावर्तकाः—इतरभेदानुमितिहेतवः नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः। नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः। पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदविशेषणम्। घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तं प्रकारताविशेषणम् । एतेन 'व्यावर्तका' इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि

नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यानस्यापि कृतत्वादिति प्रत्युक्तम्।

सीता

विशेषस्य किं लक्षणम् इतिजिज्ञासायामाह मूले नित्यद्रव्येति। व्यावर्त्तका इत्यस्यार्थमाह न्यायबोधिन्यां इतरेति स्वेतरेभ्यो योभेदः तस्य या अनुमितिः तस्याः हेतवः इत्यर्थः। तस्यैव निष्कृष्टार्थमाह नित्यद्रव्येति। नित्यद्रव्यनिरूपितं वृत्तित्वं नित्यद्रव्यवृत्तित्वं तद्रूपा या पक्षधर्म्मता तत्प्रयोज्या या अनुमितिः तज्जनकतास्वरूपानुभावकताशालिन इतितदर्थः एतदनुसारेण लक्षणस्वरूपमाह नित्यद्रव्यनिष्ठविशेष्यतेति। नित्यद्रव्यनिष्ठा या विशेष्यता तन्निरूपिता या एकमात्रवृत्तिभेदानुमितिजनकतायाः अवच्छेदिका प्रकारता तदाश्रयत्वं। विशेषस्य लक्षणमितितदर्थः। पदानां कृत्यमाह पार्थिवेति।

पद्मा

नित्यद्रव्यमें रहने वाली व्यावर्त्तक वस्तुहै विशेष। विशेषका लक्षण एवं उसका स्वीकारप्रयोजन पहले बतलाया जाचुकाहै तदनुसार समझना।

समवायस्य किं लक्षणम्?

**नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोमध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति॥**

(न्या०) समवायं निरूपयति—नित्येति। सम्बन्धत्वं विशिष्टप्रतीतिनियामकत्वम्। तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम्। ययोर्द्वयोमध्य इति। यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः॥

सीता

समवायस्य किं लक्षणम् इतिजिज्ञासायामाह मूले नित्येति। तथाच नित्यसम्बन्धत्वम् इत्यपि समवायलक्षणमित्यर्थः अयुतसिद्ध-

पदार्थमाह ययोर्द्वयोरित्यादि। सम्बन्धपदार्थमाह न्यायबोधिन्यां विशिष्टेति। अयुतसिद्धत्वं विशदयति यन्निष्ठकालेति। यदवच्छेदेन यद्वस्तु काले तिष्ठति तयोरयुतसिद्धत्वमिति तत्सरलार्थः। यथा कपालावच्छेदेन घटः काले तिष्ठतीति घटकपालयोः अयुतसिद्धत्वम्। एवं गुणगुण्यादेरपि बोध्यम्।

पद्मा

नित्य जो सम्बन्ध वह कहलाताहै समवाय। वह अयुतसिद्धोंमें रहता है अर्थात् उनका सम्बन्ध होताहै। जिन वर्त्तमान दो विषयोंके अन्दर एक अपरमे ही रहता वे दोनों अयुतसिद्ध कहलातेहैं। जैसे घट जब रहेगा तो कपालमे रहेगा अतः घट कपाल अयुतसिद्ध हैं। इसी प्रकार गुणगुणी आदि मे भी समझना। अवयव अवयवी, गुणगुणी, क्रिया क्रियावान् जाति और तदाश्रय, अर्थात् द्रव्य-गुण कर्म, विशेष और नित्यद्रव्य ये अयुतसिद्ध होतेहैं।

प्रागभावस्य किं लक्षणम्?

**अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य॥**

प्रध्वंसस्य किं लक्षणम्?

**सादिरनन्तः प्रध्वंसः। उत्पत्त्यनन्तरं कार्यस्य॥**

सीता

प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावानां कानि लक्षणानीति जिज्ञासायामाह मूले अनादिरित्यादि। एतेषां लक्षणानि तत्समन्वयप्रकारसहितानि पूर्वोक्तानि वेदितव्यानि।

पद्मा

प्रागभाव प्रध्वंसाभाव अत्यन्ताभाव और अन्योन्याभाव इन सब के लक्षण उदाहरण आदि प्रत्यक्षखण्डमे बतलाये जा चुकेहैं तदनुसार समझना चाहिये।

अत्यन्ताभावस्य लक्षणं निरूप्यते—

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ता-**

**भावः। यथाभूतले घटो नास्तीति ॥**

(न्या०) अत्यन्ताभावं निरूपयति—त्रैकालिकेति। (प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वेसत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम्। ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम्। वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम् ॥)

सीता

मूले त्रैकालिकपदं नातिप्रयोजनमित्याह न्यायबोधिन्यां वस्तुतः संसर्गाभावत्वमित्यादि। अयंभावः, अन्योन्याभावस्य प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्नैव। ध्वंसप्रागभावप्रतियोगिता किञ्चित्सम्बन्धावच्छिन्नैव न भवति। तादात्म्यभिन्नसम्बन्धावच्छिन्ना तर्हि प्रतियोगिता अत्यन्ताभावस्यैवेति तादृशप्रतियोगितानिरूपकाभावत्वस्य तल्लक्षणत्वे नकोऽपिदोषः इति त्रैकालिकपदप्रवेशस्य न प्रयोजनम्।

अन्योन्याभावस्य किं लक्षणम्?

**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। यथा घटः पटो नेति ॥**

(न्या०) अन्योन्याभावं निरूपयति—तादात्म्येति ॥

पद्मा

तादात्म्यसम्बन्धावच्छिन्न इत्यादि अन्योन्याभावके लक्षणका समन्वय इसप्रकार समझना—तादात्म्यसम्बन्धसे वस्तु अपनेमेंही रहतीहै। और जो वस्तु जहाँ जिस सम्बन्धसे नहीं रहतीहै। वहाँ उस वस्तुका तत्सम्बन्धावच्छिन्नप्रतियोगिताक अभाव रहता है। जैसे तादात्म्य सम्बन्धसे घट घटमे ही रहता अन्यत्र नहीं रहता। अतः घट छोड़कर अन्यत्र पट आदि सभीमें घटका तादात्म्यसम्बन्धाव वच्छिन्नप्रतियोगिताकाभाव रहेगा। वही है। घटका अन्योन्याभाव। इसी प्रकार अन्यत्रभी समझना।

पदार्थानुपसंहरति—

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ।**

( न्या० ) सर्वेषामिति । "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायस्यादिमसूत्र उक्तानां प्रमाणप्रमेयादीनामित्यर्थः । विस्तरस्त्वन्यत्रानुसन्धेयः ।

सीता

एते एव पदार्थाः कथं इतिजिज्ञासायामाहमूले सर्वेषाम् इत्यादि । पदार्थत्वस्य द्रव्यादिसप्तान्यतमत्वव्याप्यतया सर्वेषां सप्तस्वेवान्तर्भावात् नातिरिक्तपदार्थशङ्कया विभागव्याघात इतिभावः । शक्तेर्यथा नातिरिक्तपदार्थत्वम् तथा प्रागुक्तं वेदितव्यम् । सर्वेषामिति सर्वनाम्ना केषां ग्रहणमिति जिज्ञासया पारमर्षं सूत्रमाह प्रमाणेत्यादि । एषु सांसारिकसकलवस्त्वन्तर्भावः एषां च द्रव्यादिषु सप्तस्वन्तर्भावः इति नातिरिक्तपदार्थप्रत्याशेतिभावः । सादृश्यान्तर्भावमाचष्टे तद्भिन्नेत्यादि । तत्तत्स्थले तत्तद्धर्म्मरूपाणां सादृश्यानाम् यथायथं द्रव्यादिषु अन्तर्भावः इतिभावः ।

पद्मा

शक्ति सादृश्य आदि सारे पदार्थ इन्हीं द्रव्य गुण आदि पदार्थों में अन्तर्भूत हो जाते हैं अतः पदार्थ सातही हैं यह बात सिद्ध हुई ।

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥**

इति श्रीमहामहोपाध्यायान्नम्भट्टविरचितस्तर्कसंग्रहःसमाप्तः ॥

( न्या० ) काणादेति । कणादस्येदं काणादम् । काणादन्यायमते इतिद्वन्द्वगर्भकर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् ।

कणादन्यायामिन्नमतद्वयविषयाभिन्नमतद्वयविषयबालसमवेताभिन्नव्युत्पत्तिसिद्धिप्रयोजकान्नंभट्टभूतकालीनकृतिविषयाभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ॥

कृष्णावलम्बिनो गाः पुषो गोवर्द्धनः स्तमभ्यर्चयन् ।
विपुलाभीरसभाजन जनितबुधेन्द्रस्तवाभिरचनाभिः ॥

इति श्रीगोवर्धनविरचिता तर्कसंग्रहस्य न्यायबोधिनीव्याख्या समाप्ता ।

## सीता

स्वनामनिर्द्देशपुरस्सर चरमं वक्तव्यं पद्येनाह मूलकारः कणादेति मतयोरिति सप्तम्यन्त पदम् । बालानां व्युत्पत्तिर्बोधः तस्यसिद्धिः सम्पत्तिः तस्यै । कणादमते गोतममते च विषये बालानां बोधसम्पत्त्यै अन्नम्भट्टनाम्ना तदभिन्नेन तर्कसंग्रहग्रन्थो रचित इतिभावः । मतत्वं मति विषयत्वम् । न्यायबोधिन्यां कणादन्यायाभिन्नेत्यादि पाठाभ्युपगमे कणादन्यायाभिन्नं यन्मतद्वयं तस्य यो विषयः तद्विषयिणी या बालसमवेताभिन्ना व्युत्पत्तिः बालकेषु विद्यमानः कणादगोतममतिविषयीभूतवस्तुविषयकबोधः तदर्थम् अन्नम्भट्टेन मया अयं तर्कसंग्रहग्रन्थो रचितः इतिभावार्थः ।

इति श्रीआनन्दझा विरचिता सीता समाप्ता ।

## पद्मा

कणादमत अर्थात् वैशेषिकमत और न्यायमत विषय में, बालकों को बोध हो एतदर्थ विद्वान अन्नंभट्ट ने तर्कसंग्रह ग्रन्थ की रचना की । न्याबोधिनी के अन्त में कुछ पुस्तकों में (१) एक पद्य प्रक्षिप्त पाया जाता है उसका अर्थ यह है कि गोवर्द्धनकी ( मेरी ) वाणी तथा गोवर्द्धन पर्वत की गाये कृष्ण भगवान को अवलम्बन करने वाली हैं । अतः रसभाजनसे अर्थात् रसना से कीजाने वाली विपुल स्तवरचना के द्वारा गोवर्द्धन ने ( पण्डित तथा पर्वत ने ) उस कृष्ण की पूजा की । पर्वत पक्ष में विपुलाभीर इत्यादि का अर्थ यह है कि विपुल अहीरों की सभामे स्थित जनसमुदाय से कृत बुधेन्द्र-कृष्ण की स्तव रचना द्वारा । अर्थात वह पर्वत ने गोपकृत स्तव के द्वारा भगवान की स्तुति की । पद्मा समाप्त ।

# तर्कसंग्रह न्याय बोधिनी- प्रश्नावली

१-"सप्तपदार्थाः" इति मूले सप्तग्रहणं किमर्थं ? कस्तत्र न्याय बोधिन्या आशयः, शक्तिपदार्थस्याधिकस्य सत्त्वे कथं वा पदार्थाः सप्तैव ?

२-अन्धकारस्य कथं न द्रव्यत्वम् ।

३-"गन्धवत्त्वं पृथिव्या लक्षणम्" इत्यत्र कस्य कथं लक्ष्यता लक्षणता च ? किं च पृथिव्याः पर्य्यवसितं लक्षणम् ।

४-तत्तत्पद-प्रयोजन-प्रदर्शनपूर्वकं वायोर्लक्षणम् तत्समन्वय-प्रकारश्चोच्यताम् ।

५-अव्याप्त्यतिव्याप्त्यसम्भवानां लक्षणानि कानि कथं च तत्समन्वयः?

६-किं नाम भूतत्वं किं च मूर्त्तत्वम् ? कथं च तल्लक्षण समन्वयः ?

७-आत्ममनसोः किं लक्षणम् न्यायबोधिनीप्रदर्शित तत्तद्विशेषण प्रयोजन-प्रदर्शन-पूर्वकमुच्यताम् ।

८-रूपस्य किं लक्षणं, का तत्र प्रतिपदव्यावृत्तिः ? अथवेत्यादिना किं तल्लक्षणमुक्तं न्यायबोधिन्याम् ।

९-रूपादिचतुष्टयं कुत्र पाकजम् ? का च पाकप्रक्रिया ?

१०-स्नेहस्य किं लक्षणम् ? "वस्तुतस्तु" इत्यादिना किमुक्तं न्याय बोधिनीकृता ? तत्पक्षे च किं स्नेहस्य लक्षणम् ।

११-शब्दस्य किं लक्षणम् ? के भेदाः का तदुत्पत्तिप्रक्रिया ?

१२-स्मृतेः किं लक्षणम् ? किंच तत्र तत्तद्विशेषण प्रयोजनम् ?

१३-यथार्थानुभवस्य तथाऽयथार्थानुभवस्य च किं न्यायबोधिन्युक्तं निष्कृष्टं लक्षणम् ? कश्च तत्समन्वयप्रकारः ।

१४-किं साधारणकारणत्वम् कथं च त लक्षणसमन्वयः ।

१५-असमवायिकारणस्य किं निष्कृष्टं लक्षणं कथंच तत्समन्वयः ?

१६-करणस्य लक्षणे किं नाम असाधारणम् ? किं च तन्निवेश प्रयोजनम्

१७-प्रत्यक्षप्रमायाः द्विविधं लक्षणं प्रदर्श्य तत्समन्वयो विधीयताम्

१८-संयुक्तसमवेतसमवाय समवेतसमवायसन्निकर्षयोः किं प्रयोजनम् ? का च कर्य्यकारणभावप्रक्रिया ?

१९-अभावप्रत्यक्षे कः सन्निकर्षः ? विशेषणताचेत् कति तद्भेदाः ? कानि च तदुदाहरणानि ।

२०-अनुमानानुमित्योः किं परिष्कृतं लक्षणम् कथं तत्समन्वयः ? काच तत्तत्पद व्यावृत्तिः ?

२१-किं परामर्शस्य निष्कृष्टं लक्षणम् ? का तत्र प्रतिपदव्यावृत्तिः ? कश्च कार्य्यकारणभाव प्रकारः ?

२२-का सिद्धान्तान्वयव्याप्तिः का च पूर्वपक्षान्वयव्याप्तिः तथा का व्यतिरेकव्याप्तिः ? पर्वतो वह्निमान्धूमात् इत्यत्र कथं तल्लक्षण सङ्गमनम् ?

२३-स्वार्थानुमिति परार्थानुमित्योः को भेदः किं तदुदाहरणम् ? के पञ्चावयवाः ? का तदुक्तिप्रक्रिया ?

२४-अनुमितेः करणविषये मूलन्यायबोधिन्योः कश्चिद्विशेषो दृश्यते-न वा ? दृश्यते चेत् कः ?

२५-लिङ्गं कतिविधं ? किं तत्रान्वयव्यतिरेकित्वम् ? कश्च तत्समन्वय प्रकारः ।

२६-किं प्राचीनसम्मतं हेतौ केवलान्वयित्वं ? किं च नवीन सम्मतम् ? का तत्समन्वयप्रक्रिया !

२७-केवलव्यतिरेकिणः किं लक्षणम् ! कथं तत्समन्वयः किं च तदुदाहरणम् सर्वं न्यायबोधिन्युक्तदिशा प्रोच्यताम् ।

२८-पक्षसपक्षविपक्षाणाम् कानि लक्षणानि तदुदाहरणानि च ?

२९-किं सव्यभिचारसामान्यलक्षणम् ? किं च तद्विशेषलक्षणम् ? "वस्तुतस्तु" इत्यादिना किमुक्तं न्यायबोधिनीकृता ।

३०-विरुद्धसत्प्रतिपक्षयोः दुष्टयोः विरोधसत्प्रतिपक्षयो र्दोषयोश्च किं लक्षणम् कथं तत्समन्वयः ?

३१-किमसिद्धसामान्यलक्षणम् ? किं च तद्विशेषलक्षणम् ? किमुपाधिलक्षणम् कथं तत्तत्समन्वयः ?

३२-उपमितेः का प्रक्रिया ? उपमानविषये किंमूल कारेण किंच न्यायबोधिनीकारेण प्रोक्तम् ?

३३-शक्तिलक्षणयोर्लक्षणमुक्त्वा लक्षणाभेदाः उच्यन्ताम् ।

३४-आकांक्षायोग्यतासान्निधीनां लक्षणान्युक्त्वा तत्समन्वयः कुत्रापि विधीयताम् ।

३५-संशयविपर्य्ययतर्काणां लक्षणानि सोदाहरणानि लिखत ?

३६-सुख दुःखयोः किं निष्कृष्टं लक्षणम् ? का तत्र प्रतिपदव्यावृत्तिः ?

३७-भावनायाः किं निष्कृष्टं लक्षणम् का तत्र प्रतिपदव्यावृत्तिः सर्वं न्यायबोधिनी यथोच्यताम् ?

३८-कर्म्मसामान्यविशेषाणांम् निष्कृष्टलक्षणान्युक्त्वा तत्समन्वयो विधीयातम् ?

३९-अभावसामान्यलक्षणमुक्त्वा अन्योन्याभावस्य लक्षणम् समन्वय पूर्वकमुच्यताम् ?

## पण्डित श्री आनन्दझा न्यायाचार्य्य रचित पुस्तकें।

(मुद्रित)

तर्कसंग्रह न्याय बोधिनी संस्कृत हिन्दीटीका १॥)
मैथिली प्रबोधचन्द्रोदय (नाटक) ॥)
सीतास्वयम्वर (मौलिक मैथिली नाटक) ॥)
चन्द्रावतीचरित (सचित्र संकृतखण्डकाव्य) मैथिली सहित

(अमुद्रित)

तर्कसंग्रह दीपिका की विस्तृत हिन्दी टीका
न्यायदर्शनवात्स्यायनभाष्य की हिन्दी अनु० तथा व्याख्या
बेदान्तपरिभाषा की "भगवती" सरलसंस्कृत व्याख्या
महाकवि विद्यापति (मौलिक मैथिली नाटक)
विद्यापतिपद्यैकादशी (११ पद्योंकी अतिविस्तृत व्याख्या)

| | |
|---|---|
| महेश शतक | (दार्शनिक) मैथिली स्तुति गीत |
| विरहवेदना | मैथिलीखण्डकाव्य |
| घनश्याम | हिन्दी खण्डकाव्य |
| स्वर्ण मन्दिर | (मैथिली उपन्यास) |
| पदार्थशास्त्र | हिन्दीमें पदार्थों का गम्भीर विवेचन |
| सदाशिवेन्द्रवृत्ति | वङ्गानुवाद |

---

**सूचना**—सीता-साहित्य-सदन से प्रकाशित पुस्तकें काशीके सभी प्रतिष्ठित संस्कृतपुस्तकविक्रेताओं के पास भी मिल सकती हैं, तथा "सदन" के निज कार्य्यालय सेभी। इसके अतिरिक्त व्युत्पत्तिवाद प्रश्नोत्तरावली भी यहां से मिल सकती है।

व्यवस्थापक
"सीता साहित्य सदन काशी"
२/६ धर्म्मकूप काशी।